लक्ष्मणः। अयमविरलानोकह (१) निवहनिरन्तरस्निग्ध-नीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो (२) गिरिः प्रस्रवणः (३) (क)।

रामः। स्मरसि सुतनु तस्मिन् पर्व्वते लक्ष्मणेन
(२८) प्रतिविहितसपर्य्यास्वस्थयोस्तान्यहानि (४)।
स्मरसि सरसतीरां (५) तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्त्तनानि (ख)॥

वनानि गृहिणः गृहस्थाः शमिनः वीतरागाः सन्तः आतिथेयम् अतिथि-परिचर्य्या परमम् अतिमहत् कर्म्म येषां ते तथोक्ताः आतिथ्यनिष्ठा इत्यर्थः नीवारमुष्टिः पचनं पाकः येषां ते तथोक्ताः संयताहारा इत्यर्थः येषु तपोवनेषु गृहाणि भजन्ते निवसन्ति।

(क) अविरलेन घनसन्निविष्टेन अनोकहनिवहेन वृक्षसमूहेन निरन्तरः निरवकाशः स्निग्धः शीतलः नीलः श्यामलः परिसरः पर्य्यन्तभागः यस्य तत् तथोक्तं यत् अरण्यं तस्मिन् परिणद्धया विस्तृतिमापन्नया गोदावर्य्या नद्या मुखरः कलकलपूर्णः कन्दरोऽस्य स तथोक्तः सततम् अविरतम् अभिष्यन्दमानैः आविर्भवद्भिः मेघैः जलदैः मेदुरितः सान्द्रीकृतः नीलिमा श्यामलता यस्य स तथोक्तः जनस्थानस्य तदाख्यस्य महारण्यस्य मध्यं मध्यभागं गच्छति प्राप्नोति अधिकरोतीति यावत् स तथोक्तः जनस्थानमध्यवर्त्तीत्यर्थः अयं प्रस्रवणः तन्नामा गिरिः।

(ख) हे सुतनु शोभनाङ्गि तस्मिन् पर्व्वते प्रस्रवणे लक्ष्मणेन प्रतिविहितया कृतया सपर्य्यया परिचर्य्यया स्वस्थयोः सुखेनावस्थितयोः आवयोः तानि

---

(१) अविरलानोकह।१।
अयमविरलानोकह।२।३।४।
(२) जनस्थानमध्यमः।१।४।
जनस्थानमध्यगः।२।३।
(३) प्रस्रवणः।१।१।४।
प्रस्रवणो नाम।२।
(४) स्वस्थयोः।१।३।
सुस्थयोः।२।
(५) सरसतीराम्।१।३।
सुरसनीराम्।२।

अपिच ।

किमपि किमपि मन्दं मन्दमासत्तियोगा- 27
दविरलितकपोलं (१) जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो- (२)
रविदितगतयामा रात्रिरेव व्यरंसीत् (क) ॥

लक्ष्मणः । एषा पञ्चवट्यां शूर्पणखा ।

सीता । हा अज्जउत्त एत्तिअं दे (३) दंसणं (ख) ।

रामः । अयि विप्रयोगत्रस्ते चित्रमेतत् (ग) ।

सीता । जधा तधा होदु दुज्जणो असुहं उप्पादेदि (घ) ।

अहानि दिनानि स्मरसि सरसं सुखसेव्यं तीरमस्याः तां तथोक्तां गोदावरीं वा स्मरसि तस्य पर्व्वतस्य उपान्तेषु पर्य्यन्तभागेषु आवयोः वर्त्तनानि स्वच्छन्द-सञ्चारान् वा स्मरसि । चतुर्थपादस्थवकारो विकल्पबोधकः ।

(क) आसत्तियोगात् सान्निध्यवशात् अविरलितः अन्योन्यसंसक्तः कपोलो गण्डो यस्मिन् कर्म्मणि तद्यथा तथा अक्रमेण आनुपूर्व्वीं विना मन्दं मन्दं नीचैः नीचैः किमपि किमपि जल्पतोः आलपतो. अशिथिले गाढे परिरम्भे आलिङ्गने व्यापृतः आसक्तः एकः एकः दोः बाहुः ययोः तौ तथोक्तयोः आवयोः अविदिताः अपरिज्ञाताः गताः अतीताः यामाः प्रहराः यस्याः सा तथोक्ता एव रात्रिः व्यरंसीत् विरराम प्रभाता इत्यर्थः ।

(ख) हा आर्य्यपुत्र एतावत् ते दर्शनम् ।

(ग) विप्रयोगत्रस्ते विरहकातरे ।

(घ) यथा तथा भवतु दुर्जनः असुखम् उत्पादयति ।

(१) अविरलित । १ । २ ।
अविचलित । ३ । ४ ।
(२) सपुलक । १ । ३ । ४ ।
अशिथिल । २ ।
(३) एत्तिअं ज्जेव । १ । २ । ४ ।
एत्तिअं दे । ३ ।

रामः । हन्त वर्त्तमान इव (१) जनस्थानवृत्तान्तः प्रतिभाति ।

लक्ष्मणः ।

28 अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना(२)
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्य्यचरितै- (३)
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् (क) ॥

सीता । सास्रमात्मगतम् । अइ देव रहुउलाणन्द(४) एवं (५) मम कारणादो किलिट्ठो सि (६) (ख) ।

लक्ष्मणः । रामं निर्वर्ण्य साकूतम् (ग) । आर्य्य किमेतत्

(क) अथ पापैः दुराचारैः रक्षोभिः राक्षसैः कनकनिर्म्मितः हरिणः कनकहरिणः स एव छलं तस्य विधिना अनुष्ठानेन हेममृगरूपेण मारीचेन वञ्चयित्वेत्यर्थः इदं तथा वृत्तम् आचरितं यथा क्षालितम् सम्यक् प्रतिकृतमपि व्यथयति दुःखमुत्पादयति । शून्ये मानवसमागमवर्जिते जनस्थाने विकलैः वैक्लव्यपूर्णैः अतएव करुणैः शोकोद्दीपकैः आर्य्यस्य चरितैः क्रियाभिः ग्रावा पाषाणोऽपि रोदिति वज्रस्य हृदयमपि दलति विदीर्य्यते ।

(ख) अयि देव रघुकुलानन्द एवं मम कारणात् क्लिष्टः असि ।

(ग) साकूतम् साभिप्रायम् रामपरिसान्त्वनाभिप्रायेणेत्यर्थः ।

---

(१) वर्त्तमान इव । १ । ४ ।
वर्त्तमान इव मे । २ । ३ ।
(२) कपटहरिण । १ ।
कनकहरिण । २ । ३ । ४ ।
(३) विकलकरणैः । १ । २ ।
करुणविकलैः । ३ । ४ ।
(४) रहुउलाणन्द । १ । २ । ४ ।
रहुउलालङ्कार । ३ ।
(५) एव्वं । १ । ३ । ४ ।
एव्वं वि । २ ।
(६) कलिटो सि । १ ।
किलिन्तो आसी । २ ।
किलिङ्गो सि । ३ ।
किलिटो सि । ४ ।

29. अयं ते बाष्पौघस्त्रुटित इव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्मातहृदयः(१) (क) ॥

रामः । वत्स

30. तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः ।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्म्मव्रण इव वेदनां करोति (ख) ॥

(क) ते तव अयं बाष्पौघः अश्रुप्रवाहः त्रुटितः छिन्नसूत्रः मुक्तामयः मणिसरः हार इव धाराभिः धरणीं भूमिं विसर्पन् गच्छन् प्लावयन् इति यावत् जर्जराः चूर्णिताः कणाः यस्य स तथोक्तः सन् लुठति भरेण आतिशय्येन आध्मातम् उत्तापितं परिधूपितं वा हृदयं येन स तथोक्तः आवेगः शोकप्रसरश्च निरुद्धः नियन्त्रितोऽपि स्फुरन्तौ कम्पमानौ अधरनासापुटौ यस्य सः तस्य भावः तत्ता तया हेतुना अधरनासापुटयोः स्फुरणदर्शनेनेत्यर्थः परेषाम् अन्येषाम् उन्नेयः अनुमेयः भवति ।

(ख) प्रियजनेन विप्रयोगात् विरहात् जन्म यस्य सः प्रियजनविरहजनितः तीव्रः सुदुःसहोऽपि तत्कालं तस्मिन् समये प्रतिकृतिवाञ्छया वैरप्रतिमोचनवासनावशवर्त्तितया विसोढः दुःखाग्निः शोकदहनः मनसि पुनः विपच्यमानः विपाकमापद्यमानः प्रज्वलन्निति यावत् हृदः हृदयस्य मर्म्मणि मर्म्मप्रदेशे संरूढः सञ्जातः व्रण इव वेदनां यातनां करोति जनयति ।

(१) भवति च भराध्मातहृदयः । १ । ३ । ४ । भवति विरसाध्मातहृदयः ।२।

सीता । हद्धी हद्धी अहं वि (१) अदिभूमिं गदेण रण-रणएण अज्जउत्तसुस्सं विअ अत्ताणं पेक्खामि (क) ।

लक्ष्मणः । स्वगतम् । भवत्वन्यतः क्षिपामि । चित्रं विलोक्य प्रकाशम् । तदेतन्मन्वन्तरपुराणगृध्रराजस्य (२) तत्र-भवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् (३) (ख) ।

सीता । हा ताद णिव्वूढो दे अवच्चसणेहो (ग) ।

(क) हाधिक् हाधिक् अहम् अपि अतिभूमिं गतेन रणरणकेन आर्य्यपुत्र-शून्यम् इव आत्मानं प्रेक्षे ।

अतिभूमिं गतेन—अतिभूमिम् औत्कर्ष्यं गतेन प्राप्तेन अत्यारूढेनेत्यर्थः । रणरणकेन उद्वेगेन ।

(ख) मन्वन्तरपुराणगृध्रराजस्य— मन्वन्तरपुराणस्य मन्वन्तरप्राचीनस्य मन्वन्तरप्रवृत्तिसमकालस्थायिन इति यावत् गृध्राणां पक्षिणां राज्ञः जटायुषः । मनूनाम् अन्तरम् अधिकारकालः मन्वन्तरम् । मन्वन्तराणि च पुराणेषु चतुर्द्दश परिगण्यन्ते । एकस्मिन् कल्पे स्वायम्भुवाद्याश्चतुर्द्दश मनवः पर्य्यायेण सृष्टिपालनादावधिकृताः । सप्तमस्य वैवस्वतमनोरधिकारः प्रवृत्तः अस्यैवोपक्रमे जटायुष उत्पत्तिमभिसन्धाय मन्वन्तरपुराणगृध्रराजस्येत्युक्तम् । चरित्र-विक्रमोदाहरणम्— चरित्रस्य विक्रमस्य च उदाहरणम् उल्लेखः आलेख्ये विन्यास इति यावत् ।

(ग) हा तात निर्व्यूढः ते अपत्यस्नेहः ।

निर्व्यूढः निष्ठां गतः त्वया प्राणव्ययेन अपत्यस्नेहस्य परा काष्ठा समासा-दितेत्यर्थः ।

(१) अहं वि । १ । ३ । ४ ।
अज्ज अहं वि । २ ।

(२) तदेतन्मन्वन्तरपुराणगृध्रराजस्य । १ । ३ । ४ ।
अथैतन्मन्वन्तरपुराणस्य गृध्र-राजस्य । २ ।

(३) चरित्रविक्रमोदाहरणम् । १ । २ । ४ ।
चरित्रपद्धतिरिव विक्रमोदाहर-णम् । ३ ।

रामः। हा तात काश्यप शकुन्तराज क्व पुनस्त्वादृशस्य महतस्तीर्थस्य (१) साधोः सम्भवः (क)।

लक्ष्मणः। अयमसौ जनस्थानपश्चिमः (२) चित्रकुञ्जवान् नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभागः (३) तदिदमृष्यमूकपर्व्वते मतङ्गस्याश्रमपदम् इयञ्च श्रमणा नाम सिद्धशवरी तदेतत् पम्पाभिधानं (४) सरः (ख)।

सीता। एत्थ (५) किल अज्जउत्तेण विसज्जिदामरिसधीरत्तणं (६) पमुक्ककण्ठं रुण्णं (७) आसि (ग)।

रामः। देवि रमणीयमेतत् सरः (८)

(क) तीर्थस्य तीर्थभूतस्य तीर्थवत् पावनस्येत्यर्थः।

(ख) जनस्थानपश्चिमः — जनस्थानस्य महारण्यस्य पश्चिमे दिग्विभागे अवस्थितः। दनुकबन्धाधिष्ठितः — दनुनाम्ना कबन्धेन शिरोग्रीवाशून्येन वक्षःस्थलस्थितमुखेन दानवेन अधिष्ठितः अध्युषितः।

(ग) अत्र किल आर्य्यपुत्रेण विसृष्टामर्षधैर्य्यं प्रमुक्तकण्ठं रुदितम् आसीत्। विसृष्टामर्षधैर्य्यम् - दुःसहशोकाभिभवेन विसृष्टः त्यक्तः अमर्षः कोपः धैर्य्यञ्च यस्मिन् कर्म्मणि तद्यथा तथा पम्पादर्शनादुद्भूतेन प्रभूतेन शोकावेगेन अभिभूतो रामः अमर्षं धैर्य्यञ्च विहाय इह मुक्तकण्ठं रुरोदेत्यर्थः।

(१) तीर्थस्य। १। २। ४। तीर्थभूतस्य। ३।

(२) जनस्थानपश्चिमः। १। ३। ४। जनस्थानपश्चिमतः। २।

(३) दण्डकारण्यभूभागः। १। २।४। दण्डकारण्यभागः। ३।

(४) पम्पाभिधानम्। १। २। ४। पम्पा नाम। ३।

(५) एत्थ। १। ३। ४। जत्थ। २।

(६) विच्छड्डिदामरिसधीरत्तणं।१।४। विच्छड्डिदामरिसाधीनं। २। विसज्जितामरिसधीरत्तणं। ३।

(७) रुदिअं। १।२। रुण्णं। ३। ४।

(८) एतत्पम्पासरः। १। २। ४। एतत्सरः। ३।

१। एतस्मिन् मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
वाष्पाम्भःपरिपतनोद्गमान्तराले
सन्दृष्टाः कुवलयिनो भुवो विभागाः (क) ॥

लक्ष्मणः । अयमार्य्यो हनूमान् (ख) ।

सीता । एसो सो चिरणिव्विसुजीअलोअसमुद्धरण-(१) गुरुओवआरी महाभाओ मारुदी (ग) ।

रामः ।

दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धनः ।

(क) एतस्मिन् सरसि मदकलानां मदमत्तानाम् हर्षातिरेकात् नदतां क्रीड़तांश्चेत्यर्थः मल्लिकाक्षाणां मलिनचञ्चुचरणानां शुक्लवर्णानां हंसविशेषाणां पक्षैः पतत्त्रैः व्याधूताः चालिताः अतएव स्फुरन्तः कम्पमानाः उरवः वृहन्तः दण्डाः येषां तानि तथोक्तानि पुण्डरीकाणि सितकमलानि येषु ते तथोक्ताः कुवलयिनः नीलोत्पलबहुलाः भुवो विभागाः भूभागाः पम्पाया अंशविशेषा इति यावत् वाष्पाम्भसाम् अश्रुजलानां परिपतनस्य निर्गमस्य उद्गमस्य उदयस्य च अन्तराले मध्यकाले सन्दृष्टाः अवलोकिताः ।

(ख) देवयोनिसम्भवत्वात् महावीरत्वात् महोपकारकत्वाच्च हनूमत आर्य्य इति विशेषणम् ।

(ग) एषः सः चिरनिर्विसुजीवलोकसमुद्धरणगुरूमकारी महाभागः मारुतिः ।

चिरं दीर्घकालं निर्विसुस्य शोकाकुलस्य जीवलोकस्य सर्व्वेषां जीवानां समुद्धरणेन शोकापनयनेन गुरु भूयिष्ठम् उपकृतवान् यः सः तथोक्तः । सीतां रावणेन हृतामवगम्य सर्व्व एव जीवलोकः शोकार्त्तः समपद्यत तस्यां प्रत्यानीतायां जीवलोकस्य शोकोऽपनीतः तत्प्रत्यानयनकार्य्ये च प्रधानसहायत्वात् हनूमतो महोपकारित्वम् ।

---

(१) पञ्चुद्धरण । १ । २ । ४ । समुद्धरण । ३ ।

यस्य वीर्य्येण क्वतिनो वयञ्च भुवनानि च (क)॥

सीता। वच्छ एसो कुसुमिदकअम्बतरुतण्डविदवरहिणो किंणामहेओ गिरी जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसिरी मुच्छन्तं मुच्छन्तो तुए परुसेण(१) अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो (ख)।

लक्ष्मणः।

32. सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम यस्मिन् नीलस्निग्धः श्रयति शिखरं नूतनस्तोयवाहः(२) (ग)।

रामः।

33. वत्सैतस्माद्विरम विरमातःपरं न क्षमोऽस्मि प्रत्यावृत्तः पुनरपि स मे जानकीविप्रयोगः॥

लक्ष्मणः। अतःपरमार्य्यस्य तत्रभवतां कपिराक्षसानाञ्च(३)

(क) क्वतिनः सिद्धकामाः।

(ख) वत्स एषः कुसुमितकदम्बतरुताण्डवितबर्हिणः किन्नामधेयः गिरिः यत्र अनुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मूर्च्छन्तं मूर्च्छन् त्वया परुदितेन अवलम्बितः तरुतले आर्य्यपुत्त्रः आलिखितः।

वत्सेति लक्ष्मणसम्बोधनम्। कुसुमितेत्यादि— कुसुमितेषु जातपुष्पेषु कदम्बतरुषु ताण्डविताः नृत्यासक्ताः बर्हिणः मयूराः यस्मिन् सः तथोक्तः। अनुभावेत्यादि— अनुभावसौभाग्यं प्रभावसम्पत् तन्मात्रं परिशेषम् अवशिष्टं यस्याः सा तथोक्ता धूसरा ईषत्पाण्डुः म्लानेति यावत् श्रीः यस्य स तथोक्तः।

(ग) ककुभसुरभिः— ककुभैः अर्ज्जुनपुष्पैः सुरभिः आघ्राणतर्पणगन्धपूर्णः।

(१) परुसेण। १। ३। ४।
परुदिएण। २।
(२) शिखरं नतनः। १। २। ४।
शिखराण्युन्नतः। ३।
(३) कपिराक्षसानाम्। १। ३। ४।
कपिराक्षसानाञ्च। २।

असंख्यातान्युत्तरोत्तराणि कर्म्माश्चर्य्याणि परिश्रान्ता चेय-माय्यौ तद्विज्ञापयामि विश्रम्यताम् (१)।

सीता । अज्जउत्त एदिणा चित्तदंसणेण पच्चुप्पसदोह दाए अत्थि मे विसप्पं (क) ।

राम: । नन्वाज्ञापय ।

सीता । जाणे पुणो वि पसस्सगम्भीरासु वणराइसु विहरिस्सं पवित्तसोम्मसिसिरावगाहं ( २ ) च भअवदिं भाईरहिं अवगाहिस्सं (ख) ।

राम: । वत्स लक्ष्मण ।

लक्ष्मणः । एषोऽस्मि ।

रामः । अचिरं सम्पादनीयो दोहद इति सम्प्रत्येव गुरुभिः सन्दिष्टम्(३) तदस्खलितसुखसम्पातं रथमुपस्थापय (ग) ।

(क) आर्य्यपुत्र एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया: अस्ति मे विज्ञाप्यम् ।

(ख) जाने पुनः अपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि पवित्र सौम्यशिशिरावगाहां च भगवतीं भागीरथीम् अवगाहिष्ये ।

प्रसन्नगम्भीरासु - प्रसन्नाः श्वापदसञ्चारनिशाचरोपप्लवादिराहित्येन निरुपद्रवाः गम्भीराश्च तासु । पवित्रेत्यादि - पवित्रः पावनः सौम्य सुभगः सुखकर इति यावत् शिशिरः सन्तापहरश्च अवगाहः मज्जनं यस्यां तां तथोक्ताम् ।

(ग) अस्खलितसुखसम्पातम्— सुखेन अक्लेशेन सम्पातः गमनम् सुख-

(१) विश्राम्यतामिति । १ । २ ।
विश्रम्यताम् । ३ ।
विश्रम्यतामिति । ४ ।

(२) पवित्तसोम्मसिसिरावगाहां । १ ।
पवित्तनिम्मलसिसिरावगाहां ।२।
पवित्तसोम्मसिसिरसलिलावगाहं । ३ ।
पवित्तसोम्मसिसिरावगाहं । ४ ।

(३) गुरुभिरादिष्टम् । १ । ४ ।
गुरुभिः सन्दिष्टम् । २ । ३ ।

सीता । अज्जउत्त तुम्हेहिं वि तहिं गन्तव्वं (१) (क) ।

रामः । अयि कठिनहृदये एतदपि वक्तव्यमेव (२) ।

सीता । तेण हि पिअं मे (ख) ।

लक्ष्मणः । यथाज्ञापयत्यार्य्यः ।

इति निष्क्रान्तः ।

रामः । प्रिये इतो वातायनावर्त्तके मुहूर्त्तं संविष्टौ भवावः (३) (ग) ।

सीता । एवं होदु । ओहीरिज्जामि (४) क्खु परिस्सम जणिदाए णिद्दाए (घ) ।

सम्पातः अस्खलितः स्थिरः सुखसम्पातोऽनेन स तम् तेन गच्छतां शारीरः क्लेशो न भवतीत्यर्थः । सीतायाः पूर्णगर्भत्वात् तादृशस्यैव रथस्य गमनोपयोगित्वम् ।

(क) आर्य्यपुत्र युष्माभिः अपि तत्र गन्तव्यम् ।

(ख) तेन हि प्रियं मे ।

(ग) इतः अस्मिन् वातायनं गवाक्षः आवर्त्तकम् अपवारकम् यत्र स्थिता नान्यैर्लक्ष्यन्ते तादृशं स्थानमित्यर्थः वातायनस्य आवर्त्तके वातायनसन्निकृष्टे निभृते स्थाने मुहूर्त्तं कञ्चित्कालं संविष्टौ शयानौ भवावः ।

(घ) अपह्रिये खलु परिश्रमजनितया निद्रया ।

अपह्रिये अभिभूये ।

(१) तुम्हेहिं वि तहिं गन्तव्वं ।१।२।४।
तुम्हेहिं गन्तव्वं । ३ ।

(२) एतदपि युष्माभिरपि वक्तव्यमेव ।१।
एतदपि वक्तव्यमेव । २ । ३ । ४ ।

(३) हन्त वातायनावर्त्तके मुहूर्त्तं संविष्टौ भवावः । १ ।
वातायनोपकण्ठे मुहूर्त्तं संविष्टौ भवावः । २ ।
इतस्तद्वातायनावर्त्तके मुहूर्त्तंस्थितौ भवावः । ३ ।
इतो वातायनावर्त्तके मुहूर्त्तं संविष्टौ भवावः । ४ ।

(४) ओहरिआमि । १ । २ । ४ ।
ओहरिदम्हि । ३ ।

रामः । तेन हि निरन्तरमवलम्बस्व मामत्र शयनाय(क) ।

जीवयन्निव ससाध्वसश्रमस्वेदविन्दुरधिककण्ठमर्प्यताम् ।

बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः (ख) ॥

तथा कारयन् सानन्दम् । प्रिये किमेतत्

विनिश्चेतुं शक्य (१) न सुखमिति वा दुःखमिति वा

प्रबोधो (२) निद्रा वा किमु विषविसर्पः किमु मदः ।

तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो

विकारश्चैतन्यं भ्रमयति समुन्मीलयति च (३) (ग) ॥

(क) निरन्तरम् -- निः नास्ति अन्तरम् अवकाशो यस्मिन् कर्म्मणि तत् यथा तथा गाढमित्यर्थः ।

(ख) साध्वसं स्त्रीजातिसुलभ आतङ्कः तज्जनित ईषत्कम्प इति यावत् श्रमस्वेदविन्दवः श्रमजनिता घर्म्मविन्दवः साध्वसेन श्रमस्वेदविन्दुभिश्च सह ससाध्वसश्रमस्वेदविन्दुः अतएव इन्दोरिमे ऐन्दवाः मयूखाः किरणाः तैश्चुम्बितस्य स्पृष्टस्य अतएव स्यन्दिनः द्रवतः चन्द्रमणिहारस्य चन्द्रकान्तमणिनिर्म्मितस्य हारस्य विभ्रमः शोभा यस्मिन् स तथोक्तः घर्म्मविन्दुसम्पर्कात् चन्द्रकरस्पर्शेन द्रवन्तीं चन्द्रकान्तमणिनिर्म्मितां हारयष्टिमनुकुर्व्वन्नित्यर्थः जीवयन् स्पर्शसम्भूतेन सुखसन्तानेन समुच्छ्वासयन्निव बाहुः त्वदीय इति शेषः अधिककण्ठं कण्ठे मदीये इति शेषः अर्प्यताम् ।

(ग) सुखमिति वा किमहं सुखमनुभवामि इति दुःखमिति वा किमहं दुःखमनुभवामि इति प्रबोधः किमहं जागर्म्मि इति निद्रा किमहं निद्रामि इति किमु विषविसर्पः किं मम कलेवरे विषसञ्चारादीदृशीमवस्थामापन्नोऽस्मि इति किमु मदः किं मद्योपयोगजं सम्मोहानन्दमयं भावमवाप्तवानस्मि इति वा विनिश्चेतुं निर्णेतुं न शक्ये शक्नोमि तव स्पर्शे स्पर्शे विकारः एकैकस्पर्शजनितः

(१) शक्ये । १ । शक्यः । २ । ३ । ४ ।

(२) प्रमोहः । १ । २ ।

प्रबोधः । ३ । ४ ।

(३) भ्रमयति च सम्मीलयति च । १ । २ । ४ ।

भ्रमयति समुन्मीलयति च । ३ ।

सीता। विहस्य। थिरप्पसादा तुम्हे इदो दाणीं किं अवरं (क)।

राम:। ग्लानस्य जीवकुसुमस्य विकाशनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि।
एतानि तानि वचनानि सरोरुहाक्ष्याः (१)
कर्णामृतानि मनसश्च रसायनानि (ख)॥

सीता। पिअंवद सइस्सं (२)। इति शयनाय समन्ततो निरूपयति (ग)।

चित्तविक्षेपः परिमूढः इन्द्रियगणो यस्मात् स तथोक्तः सर्व्वाणि इन्द्रियाणि मोहयन्नित्यर्थः मम चैतन्यं चेतनां बुद्धिमिति यावत् भ्रमयति तिरोधत्ते सम्मीलयति प्रकाशयति च मम बुद्धिः "क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः" इत्यर्थः।

(क) स्थिरप्रसादाः यूयम् इतः इदानीम् किम् अपरम्।

स्थिरप्रसादाः— स्थिरः अविचलितः प्रसादः स्नेहः प्रणयो वा येषाम् ते तथोक्ताः। इत इदानीं किमपरम्— स्नेहामस्मादन्यत् न किञ्चिदाशास्यमस्तीत्यर्थः।

(ख) ग्लानस्य जीवकुसुमस्य विकाशनानि— ग्लानस्य शोकाद्यभिभवेन ग्लानिमापन्नस्य जीवकुसुमस्य जीवनरूपस्य पुष्पस्य विकाशनानि उल्लासकानि। मनसश्च रसायनानि— मनसः चित्तस्य रसायनानि ग्लानिपरिहारकाण्यौषधानि यज्जराव्याधिशमनमौषधं तद्रसायनमित्युक्तलक्षणानि।

(ग) प्रियंवद शयिष्ये।

पूर्व्वोक्तरूपप्रियवाक्यपरम्पराप्रयोगात् सीतया रामस्य प्रियंवदेति सम्भा-

(१) एतानि ते सुवचनानि सरोरुहाक्ष्याः।१।
एतानि ते सुवचनानि सरोरुहाक्षि।२।
एतानि मे सुवचनानि सरोरुहाक्ष्याः।३।
एतानि तानि वचनानि सरोरुहाक्ष्याः।४।

(२) एहि संविसम्ह।१।२।४। सइस्सं।३।

रामः । अयि किमन्वेष्टव्यम् (१)

आ विवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥

सीता । निद्रां नाटयन्ती । अत्थि एदं अज्जउत्त अत्थि एदं । इति स्वपिति (क) ।

रामः । कथं प्रियवचना वक्षसि सुप्तैव । निर्वर्ण्य सस्नेहम् ।

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि पुनरसह्यो न विरहः (ख) ॥

प्रविश्य

प्रतीहारी । देव उअत्थिदो (ग) ।

रामः । अयि कः ।

यणाम् । निरूपयति अवलोकयति शयनसामग्रीसमवधानमस्ति वा न वेति निर्णयार्थमिति शेषः ।

(क) अस्ति एतत् आर्य्यपुत्त्र अस्ति एतत् ।

(ख) अमृतवर्त्तिः अमृतशलाका । शिशिरमसृणः शीतलः कोमलश्च । मौक्तिकसरः मुक्तामयी हारयष्टिः । किमस्या इत्यादि— विरहव्यतिरिक्तं सर्व्वमेवास्याः प्रियमिति भावः ।

किमस्या न प्रेयो यदि परमसह्यस्तु विरहः इति चतुर्ष्वेव पुस्तकेषु पाठो दृश्यते स तु न सङ्गच्छते इति मत्वा पाठान्तरं परिकल्पितम् ।

(ग) देव उपस्थितः ।

(१) किमन्वेष्टव्यम् । १ । २ । ४ ।      अयि किमन्वेष्टव्यम् । ३ ।

प्रतीहारी । आसन्नपरिचारओ दुम्मुहो देअस्स (१) (क) ।
Seraglio

रामः । स्वगतम् । शुद्धान्तचारी दुर्मुखः स मया पौरजानपदानपसर्पितुं (२) प्रयुक्तः । प्रकाशम् । आगच्छतु (ख) ।

प्रतीहारी निष्क्रान्ता ।

प्रविश्य

दुर्मुखः । स्वगतम् । हा कधं सीदादेईए ईदिसं अचिन्तणिज्जं जणाववादं देअस्स कधइस्सं अहवा णिओओ क्खु मे ईदिसो (३) मन्दभाअस्स (ग) ।

सीता । उत्स्वप्नायते (४) (घ) । हा अज्जउत्त सोम्म कहिं सि (५) (ङ) ।

रामः । अये सैव (६) रणरणकदायिनी चित्रदर्शना-

(क) आसन्नपरिचारकः दुर्मुखः देवस्य ।

आसन्नः यः सदा सन्निधौ तिष्ठति तादृशः परिचारकः भृत्यः ।

(ख) पौरजानपदानपसर्पितुम्— पौरान् जानपदांश्च अपसर्पितुं गूढभावेन चरित्वा तेषां चित्तं परिज्ञातुमित्यर्थः ।

(ग) हा कथं सीतादेव्याः ईदृशम् अचिन्तनीयं जनापवादं देवस्य कथयिष्यामि अथवा नियोगः खलु ईदृशः मे मन्दभागस्य ।

(घ) उत्स्वप्नायते – उत्स्वप्नः स्वप्नावस्थायां विलापादिः तं करोतीति करार्थे क्यङ्प्रत्ययः ।

(ङ) हा आर्य्यपुत्र सौम्य कुत्र असि ।

(१) दुम्मुहो देवस्स । १ । ३ । ४ ।
देवस्स दुम्मुहो । २ ।
(२) पौरजानपदानपसर्पितुम् ।१।२।
पौरजानपदचरितमुपगन्तुम् ।३।
पौरस्थानमपसर्पितुम् । ४ ।
(३) णिओओ क्खु मे ईदिसो ।३।४।
णिओओ क्खु ईदिसो । २ ।
(४) उत्स्वप्नायते । १ । २ ।
स्वप्नायते । ३ । ४ ।
(५) हा अज्जउत्त सोम्म कहिं सि।१।३।४
हा अज्जउत्त कहिं सि । २ ।
(६) ममैव । १ । ३ । ४ । सैवेयम् । २ ।

द्विरहभावना देव्याः स्वप्नोद्वेगं करोति। सस्नेहं परा-
मृशन् (१) (क)।

अद्वैतं सुखदुःखयोरनुगुणं सर्व्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्य्यो रसः।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत् प्राप्यते (ख)॥ ३९

दुर्मुखः। उपसृत्य। जअदि जअदि देओ (२) (ग)।

रामः। ब्रूहि यदुपलब्धम् (घ)।

(क) रणरणकदायिनी उद्वेगकारिणी। विरहभावना हा अज्जउत्त गत्तिअं दे दंसणं इत्यादिना पूर्व्वं प्रदर्शिता। परामृशन् स्पृशन् सीताया अङ्गे स्व हस्तं परिचालयन्नित्यर्थः।

सेव इति कवेरभिमतः पाठ इति प्रतिभाति।

(ख) यत् सुखदुःखयोः सुखे वा दुःखे वा अद्वैतम् एकरूपम् यत् सर्व्वासु अवस्थासु अनुगुणम् अनुकूलम् यत्र यस्मिन् हृदयस्य विश्रामः संसारसुलभशोकक्षोभाद्युपहतं हृदयं यदवलम्ब्य स्थैर्य्यमापद्यते इत्यर्थः यस्मिन् जरसा वार्द्धकेन रसः प्रीतिः अहार्य्यः हर्त्तुम् अशक्यः कालेन दीर्घसंसर्गेण आवरणस्य लज्जाभयादिरूपस्य सङ्कोचहेतोः अत्ययात् व्यपगमात् परिणते परिपाकमुपेयुषि स्नेहसारे यत् स्थितम् स्नेहसाररूपेण यत् परिणमतीत्यर्थः सुमानुषस्य सज्जनस्य एकम् अद्वितीयम् अतिविरलमिति यावत् भद्रं निरुपधि तत् प्रेम कथमपि प्राप्यते हि तादृशं हि प्रेम दुर्लभमिति भावः।

भद्रं तस्य सुमानुषस्य इति सर्व्वेषु पुस्तकेषु पाठो दृश्यते स च न सम्यक् लगति इति मत्वा तस्येत्यत्र प्रेम इति पदं परिवर्त्तितम्।

(ग) जयति जयति देवः।

(घ) उपलब्धं प्राप्तं परिज्ञातमिति यावत्।

(१) सस्नेहं परामृशन्। १। ३। ४। सस्नेहमङ्गमस्याः परामृशन्। २।

(२) जअदि जअदि देओ। १। २। जअदि देओ। ३। ४।

दुर्मुखः। उवत्थुवन्ति देअं पौरजाणवदा विसुमरिदा अम्हे महाराअदसरहस्स रामभद्देण त्ति (क)।

रामः। अर्थवाद एषः दोषन्तु कश्चित् कथय येन स प्रतिविधीयते (१) (ख)।

दुर्मुखः। सास्सम्। सुणादु देओ। कर्णे। एवं एवं (ग)।

रामः। अहह तीव्रसंवेगो वाग्वज्रः (२) (घ)।

इति मूर्च्छति।

दुर्मुखः। आस्ससदु देओ (ङ)।

रामः। आश्वस्य

हाहा धिक् परगृहवासदूषणं य-
द्वैदेह्याः प्रशमितमद्भुतैरुपायैः।
एतत्तत् पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्व्वतः प्रसृप्तम् (च)॥

(क) उपस्तुवन्ति देवं पौरजानपदाः विस्मारिताः वयं महाराजदशरथं रामभद्रेण इति।

(ख) अर्थवादः प्रशंसा।

(ग) शृणोतु देवः। एवमेवम्।

एवमेवम्— जनः कथयतीति शेषः।

(घ) वाक् वज्र इव वाग्वज्रः तीव्रः दुःसहः संवेगः प्रसर्पणमस्य स तथोक्तः।

(ङ) आश्वसितु देवः।

(च) प्रशमितम् परिहृतम्। उपायैः अग्निपरिशोधनादिभिः। दैवदुर्विपाकात् दैवस्य भागधेयस्य दुर्विपाकात् दुष्परिणामात्। अलर्कः उन्मत्तः

(१) दोषन्तु कश्चित् कथय येन तत्प्रतिविधीयते। १। ३। ४।
दोषन्तु मे कश्चित् कथय येन स प्रतिविधीयते। २।

(२) अहह। १।
अहह तीव्रसंवेगो वाग्वज्रः। २। ३। ४।

तत् किमत्र मन्दभाग्यः करोमि । विमृश्य सकरुणम् । अथवा किमन्यत्

४। सतां केनापि कार्य्येण लोकस्याराधनं व्रतम् ।
यत् पूजितं (१) हि तातेन माञ्च प्राणांश्च मुञ्चता (क) ॥

सम्प्रत्येव भगवता वशिष्ठेन सन्दिष्टम् (ख) ।

अपिच ।

यत् सावित्रैर्दीपितं भूमिपालै-
लोकश्रेष्ठैः साधु शुद्धं चरित्रम् (२) ।
मत्सम्बन्धात् कश्मला किंवदन्ती
स्याच्चेदस्मिन् हन्त धिङ् मामधन्यम् (ग) ॥

हा देवि देवयजनसम्भवे हा स्वजन्मानुग्रहपवित्रित (३) वसुन्धरे हा निमिजनकवंशनन्दिनि (४) हा पावकवशिष्ठारुन्धतीप्रशस्त-शीलशालिनि हा राममयजीविते (५) हा महारण्यवासप्रिय-

कुक्कुरः तस्येदम् आत्तकम् । सर्व्वतः मम कलेवरस्य सर्व्वस्मिन्नंशे । प्रसृप्तम् वेगेन सञ्चरितम् ।

(क) पूजितम् आदृतं प्रतिपालितमिति यावत् ।

(ख) जामातृयज्ञेन वयं निरुद्धा इत्यादि । ७ पृ० ।

(ग) सावित्रैः सूर्य्यवंश्यैः । चरित्रं कुलम् । मत्सम्बन्धात् मत्सम्पर्कात् ममास्मिन् कुले जन्मपरिग्रहादित्यर्थः । कश्मला मलिना ।

(१) पूरितम् ।१।२। पूजितम् ।३।४।
(२) यत्सावित्रैर्दीपितं भूमिपालैर्लोक-श्रेष्ठे साधु शुद्धं चरित्रम् ।१।२।४। यत्सावित्रैर्दीपितं लोकपूर्व्वैः सर्व्वैर्यत्नात् साधु शुद्धं चरित्रम् । २ ।
(३) पवित्रित । १ । ३ । ४ ।
पवित्रीकृत । २ ।
(४) निमिजनकवंशनन्दिनि । १ । ४ । जनकवंशनन्दिनि । २ । निमिजनकनन्दिनि । ३ ।
(५) राममयजीविते । १ । ३ । ४ । रामैकजीविते । २ ।

सखि हा प्रियस्तोकवादिनि (१) कथमेवंविधायास्तवायमीदृशः परिणामः (क) ।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥

दुर्मुख (२) ब्रूहि लक्ष्मणम् एष ते नूतनो राजा रामः समाज्ञापयति । कर्णे । एवमेवम् ।

दुर्मुखः । कहं दाणीं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्त-रहुउलसन्ताणाए (३) देईए दुज्जणवअणादो एवं अज्झवसिदं देएण (४) (ख) ।

रामः । शान्तम् कथं दुर्जनाः पौरजानपदाः ।
इक्ष्वाकुवंशोऽभिमतः (५) प्रजानां
जातञ्च दैवाद्वचनीयवीजम् ।

(क) प्रियस्तोकवादिनि — प्रियं मधुरं स्तोकम् अल्पञ्च वदत्यसाविति सा तथोक्ता तत्सम्बोधनम् प्रियवादिनि स्तोकवादिनि च इत्यर्थः ।

(ख) कथम् इदानीम् अग्निपरिशुद्धायाः गर्भस्थितपवित्ररघुकुलसन्तानायाः देव्याः दुर्जनवचनात् एवम् अध्यवसितं देवेन ।

(१) स्तोकप्रियवादिनि । १ । २ ।
प्रियस्तोकवादिनि । ३ । ४ ।

(२) दुर्मुख । १ । ३ । ४ ।
दुर्मुखं प्रति । दुर्मुख । २ ।

(३) गब्भपरिप्फुड़िदपवित्तरहुउल-सन्ताणाए । १ । २ ।
गब्भट्ठिदपवित्तसन्ताणाए । ३ ।
गब्भट्ठिदपवित्तरहुउलसन्ताणाए । ४ ।

(४) अज्जाए एवं अणज्जं ववसिदं देवेण । १ ।
एवं अणज्जं उज्झवसिदं देवेण । २ ।
एवं अज्झवसिदं देवेण । ३ ।

(५) इक्ष्वाकुवंशोद्भवः । १ । ४ ।
इक्ष्वाकुवंशोऽभिमतः । २ । ३ ।

यच्चाद्भुतं (१) कर्म्म विशुद्धिकाले 46
प्रत्येतु कस्तद्यदि दूरवृत्तम् (२) (क) ॥

तद्गच्छ ।

दुर्मुखः । हा देइ ।

इति निष्क्रान्तः ।

रामः । हा कष्टमतिबीभत्सकर्म्मा नृशंसोऽस्मि संवृत्तः

शैशवात् प्रभृति पोषितां प्रियां (३)
सौहृदादपृथगाशयामिमाम् (४) । 47
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव (ख) ॥

(क) इक्ष्वाकुवंशः प्रजानाम् पौरजानपदानाम् अभिमतः प्रियः अह्नाभाजनमिति यावत् इक्ष्वाकुवंशे तेषां द्वेषो नास्तीत्यर्थः वचनीयस्य लोकापवादस्य वीजं निदानञ्च दैवात् जातं घटितम् पूर्व्वेषां चरितं सर्व्वथा विशुद्धमासीत् अतो न वचनीयस्यावकाशोऽभूत् अधुना तु वचनीयस्यावकाशो जात इति ते निन्दन्तीत्यर्थः। ननु जनकतनयाया वह्नौ विशोध्य परिगृहीतत्वात् रक्षोगृहस्थितिनिबन्धनं दूषणं परिहृतम् तत् कथमिदानीं वचनीयस्यावकाश इत्यत आह विशुद्धिकाले अग्निपरिशुद्धिसमये यच्च अद्भुतं लोकोत्तरं कर्म्म अक्षतशरीराया अग्निमध्यान्निष्क्रमणादि अतिदूरे अतिदूरवर्त्तिन्यां लङ्कायां वृत्तं सम्पन्नं हि तत् अद्भुतं कर्म्म कः प्रत्येतु विश्वसितु यदि पौरा जानपदाश्च न तद्विश्वसन्ति न तत्र तेषां दोषोऽस्तीत्यर्थः।

(ख) सौनिकः— सूना बधस्थानं मांसविक्रयविपणिरिति यावत् तेन जीवति सौनिकः पशुपक्षिणो हत्वा मांसविक्रयेण यो जीवतीत्यर्थः। गृहशकुन्तिकाम् गृहपोषितां क्षुद्रपक्षिणीम्।

---

(१) तच्चाद्भुतं कर्म्म । १ । ४ ।
यच्चाद्भुतं कर्म्म । २ । ३ ।

(२) तद्भवि दूरवृत्तम् । १ । २ ।
तद्यतिदूरवृत्तम् । ३ । ४ ।

(३) प्रियैः । १ । ४ ।
प्रियाम् । २ ।

(४) अपृथगाशयां प्रियाम् । १ । ४ ।
अपृथगाश्रयामिमाम् । २ ।

तत् किमस्पर्शनीयः (१) पातकी देवीं दूषयामि । सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन् (२) ।

अपूर्व्वकर्म्मचाण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् (३) (क) ॥

उत्थाय । हन्त विपर्य्यस्तः सम्प्रति जीवलोकः पर्य्यवसितं (४) जीवितप्रयोजनं रामस्य शून्यमधुना जीर्णारण्यं जगत् असारः संसारः कष्टप्रायं शरीरम् अशरणोऽस्मि (५) किं करोमि का गतिः (६) (ख) । अथवा

दुःखसंवेदनायैव रामे चैतन्यमाहितम् (७) ।
मर्म्मोपघातिभिः (८) प्राणैर्वज्रकीलायितं स्थिरैः (ग) ॥

(क) अपूर्व्वकर्म्मचाण्डालम्— अपूर्व्वेण अदृष्टचरेण अश्रुतपूर्व्वेण च कर्म्मणा चाण्डालं चाण्डालवत् नृशंसबीभत्सकर्म्माणम् नाहं जात्या चाण्डालः किन्तु कर्म्मणा तथास्मि संवृत्तः ।

(ख) विपर्य्यस्तः विपर्य्ययं गतः उच्छिन्न इति यावत् । पर्य्यवसितं परिसमाप्तम् । जीर्णारण्य जीर्णारण्यसदृशं नीरसं निष्फलञ्चेति भावः । कष्टप्रायं क्लेशभूयिष्ठम् ।

(ग) संवेदनम् अनुभवः । आहितम् अर्पितम् । वज्रकीलायितम्— वज्रकीलः वज्रनिर्मितः शङ्कुः तेनेव आचरितम् यथा हृदि निहितो वज्रकीलः

(१) तन्किम् ।१।३।४। तत्किमिति ।२।
(२) स्वैरमुन्नमय्य बाहुमाकर्षन् ।१।३।४। स्वैरं समुन्नमय्य बाहुं समाकर्षन् ।२।
(३) दुर्विपाकविषद्रुमम् । १ । दुर्विपाकं विषद्रुमम् । २ । ३ । ४ ।
(४) पर्य्यवसितम् ।१। अथ पर्य्यवसितम् ।२। सम्प्रति पर्य्यवसितम् ।३। पर्य्यवसितं च । ४ ।
(५) अशरणास्तु । १ । ४ । अशरणोऽस्मि । २ ।
(६) का गतिः । १ । ३ । ४ । का गतिः क्व गच्छामि । २ ।
(७) आहितम् । १ । ३ । ४ । अर्पितम् । २ ।
(८) मर्म्मोपघातिभिः । १ । २ । ४ । मर्म्मोपतापिभिः । ३ ।

हा अम्ब अरुन्धति हा भगवन्तौ वशिष्ठविश्वामित्रौ हा भगवन् पावक हा देवि भूतधात्रि हा तात जनक हा तात हा मातरः हा परमोपकारिन् लङ्काधिपते विभीषण हा प्रियसख सुग्रीव (१) हा सौम्य हनूमन् हा सखि त्रिजटे मुषिताः स्थ (२) परिभूताः स्थ रामहतकेन (क)। अथवा कस्य तेषामहमिदानीमाह्वाने (३)।

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना॥

योऽहम्

विस्रम्भादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि (ख)॥

क्षयातिशयमुत्पादयति मम प्राणा अपि तथाभूताः इत्यङ्कते प्राणापगम एव श्रेयस्कर इति भावः।

(क) मुषिताः हृतसर्वस्वाः। परिभूताः अवमानिताः।

(ख) उन्मुच्य परित्यज्य। आतङ्केन स्वप्नोद्वेगेन स्फुरितः ईषत्कम्पितः कठोरः पूर्णः यो गर्भः तेन गुर्वीं मन्थरां तादृशगर्भभरेणाक्रान्ततया नितान्तविक्लवामित्यर्थः।

(१) हा प्रियसख सुग्रीव।१।४।
हा प्रियसख महाराज सुग्रीव।२।
(२) मुषिताः स्थ।१। दूषिताः स्थ।२।
खण्डिताः स्थ।४।
(३) कस्तु तेषामहमिदानीमाह्वाने।१।४।
को नामाहमेतेषामाह्वाने।२।

सीतायाः पादौ शिरसि कृत्वा । देवि देवि अयं पश्चिमस्ते (१) रामस्य शिरसा (२) पादपङ्कजस्पर्शः (३) (क) ।

इति रोदिति ।

### नेपथ्ये

अब्रह्मण्यम् अब्रह्मण्यम् (ख) ।

रामः । ज्ञायतां भोः किमेतत् ।

### पुनर्नेपथ्ये

ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमैः शरण्यं (४) त्वामुपस्थितः ॥

रामः । आः कथमद्यापि राक्षसत्रासः तद्यावदस्य दुरात्मनः कुम्भीनसीपुत्रस्योन्मूलनाय (५) शत्रुघ्नं प्रेषयामि । कतिचित्पदानि गत्वा पुनः प्रतिनिवृत्य (६) । हा देवि कथमेवङ्गता (७) भविष्यसि (ग) । भगवति वसुन्धरे श्लाघ्यां दुहितरमवेक्षस्व जानकीम् ।

(क) पश्चिमः चरमः नातःपरं तव मया समागमो भविष्यतीत्यर्थः ।

(ख) अब्रह्मण्यम् अवध्यताप्रार्थना यथा वयं न हन्येमहि तथा क्रियतामित्येवंरूपा । सातिशयकातरताद्योतनार्थो द्विर्भावः ।

(ग) कथमेवङ्गता भविष्यसि— एवङ्गता ईदृशीमवस्थामापन्ना कथं केनोपायेन भविष्यसि वर्त्तिष्यसे ।

---

(१) अयं पश्चिमस्ते । १ । २ ।
अपश्चिमस्ते । ३ ।
अयमपश्चिमस्ते । ४ ।

(२) शिरसा । १ । ३ । ४ । शिरसि । २ ।

(३) पादपङ्कजस्पर्शः । १ । २ । ४ ।
पादस्पर्शः । ३ ।

(४) शरण्यम् । १ । त्रातारम् । २ ।
शरणम् । ३ ।

(५) उन्मूलनाय । १ । ३ ।
समुन्मूलनाय । २ ।

(६) कतिचित्पदानि गत्वा पुनः प्रतिनिवृत्य । १ । २ ।
किञ्चित् परिक्रम्य पुनर्निवृत्य । ३ ।

(७) एवङ्गता । १ । ३ । एवंविधा । २ ।

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
तां (१) देवयजने पुण्ये पुण्यशीलामजीजनः ॥

इति निष्क्रान्तः ।

सीता । हा सोम्म अज्जउत्त कहिं सि (२) । सहसोत्थाय । हद्धी हद्धी दुस्सिविणएण विप्पलद्धा (३) अहं अज्जउत्तं आक्कन्दामि । विलोक्य । हद्धी हद्धी (४) एआइणिं मं पसुत्तं (५) उज्झिअ गदो अज्जउत्तो (६) । किं दाणीं एदं (७) । भोदु से कुविस्सं (८) जइ तं पेक्खमाणा अत्तणो पहविस्सं । को एत्थ परिअणो (क) ।

## प्रविश्य

दुर्मुखः । देइ कुमारलक्खणो विण्णवेदि सज्जो रहो आरुहदु देई (९) (ख) ।

(क) हा सौम्य आर्य्यपुत्र कुत्र असि । हाधिक् हाधिक् दुःस्वप्नेन विप्रलब्धा अहम् आर्यपुत्रम् आक्रन्दामि । हाधिक् हाधिक् एकाकिनीं मां प्रसुप्ताम् उज्झित्वा गतः आर्यपुत्रः । किम् इदानीम् एतत् । भवतु तस्य कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि । कः अत्र परिजनः ।

(ख) देवि कुमारलक्ष्मणः विज्ञापयति सज्जः रथः आरोहतु देवी ।

(१) त्वम् । १ । याम् । २ ।
(२) हा सोम्म अज्जउत्त कहिंसि । १ । २
हा सोम्म अज्जउत्त । ३ ।
(३) दुस्सिविणएण विप्पलद्धा । १ । ३
दुस्सिविणरणरणअविप्पलद्धा । २ ।
(४) हद्धी हद्धी कधं । १ २ ।
विलोक्य । हद्धी हद्धी । ३ ।
(५) परिहुत्तं । १ । २ । पसुत्तं । ३ ।
(६) अज्जउत्तो गदो । १ । २ ।
गदो अज्जउत्तो । ३ ।
(७) ता किं दाणिं एदं । १ । २ ।
किं दाणिं एदं । ३ ।
(८) भोदु कुविस्सं । १ । २ ।
भोदु से कुविस्सं । ३ ।
(९) देई । १ । ३ । देइ त्ति । २ ।

सीता । इअं आरुहामि (१) । उत्थाय । परिप्फुरइ विअ (२) मे गब्भभारो ता सिढिलं (३) गच्छम्ह (क) ।

दुर्मुखः । इदो इदो देई (४) (ख) ।

सीता । णमो तपोधणाणं णमो रङ्कुलदेअदाणं णमो अज्जउत्तचरणकमलाणं णमो सअलगुरुअणाणं (५) (ग) ।

इति निष्क्रान्तौ (६) ।

## चित्रदर्शनो नाम

### प्रथमोऽङ्कः ।

(क) इयम् आरोहामि । परिस्फुरति इव मे गर्भभारः तत् शिथिलं गच्छावः ।

(ख) इतः इतः देवी ।

(ग) नमः तपोधनेभ्यः नमः रघुकुलदेवताभ्यः नमः आर्य्यपुत्रचरणकमलेभ्यः नमः सकलगुरुजनेभ्यः ।

---

(१) इअं आरुहम्हि । १ ।
इअमहं आरुहम्हि । २ ।
इअं अहिरुहामि । ३ ।

(२) परिप्फुरदि विअ । १ ।
उत्थाय परिक्रम्य । परिप्फुरदि विअ । २ ।
उत्थाय । परिप्फुरदि विअ । ३ ।

(३) सणिअं । १ । २ ।
सिढिलं । ३ ।

(४) इदो इदो देई । १ । २ ।
इदो एदु इदो एदु देई । ३ ।

(५) णमो णमो । १ । २ ।
णमो । ३ ।

(६) निष्क्रान्तौ । १ ।
निष्क्रान्ताः सर्व्वे । २ ।
निष्क्रान्ता । ३ ।

# द्वितीयोऽङ्कः।

---

### नेपथ्ये

स्वागतं तपोधनायाः।

### प्रविश्य (१)

अध्वगवेशा तापसी। अये वनदेवतेयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते।

### प्रविश्य (१)

वनदेवता। अर्घ्यं विकीर्य्य

यथेच्छं भोग्यं (२) वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः॥

तापसी। किमत्रोच्यते

प्रियप्राया वृत्तिर्विनयमधुरो (३) वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः।

---

(१) प्रविश्य। १। २।
ततः प्रविशति। ३।
(२) यथेच्छं भोग्यम्। १। २।
तथेच्छाभोग्यम्। ३।
(३) विनयमधुर। १। २।
विनयमधुरः। ३।

पुरो वा पश्चाद्वा तदिदमविपर्य्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते (क) ॥

इत्युपविशतः ।

वनदेवता । कां पुनरत्रभवतीमवगच्छामि (१) ।

तापसी । आत्रेय्यस्मि ।

वनदेवता । आर्य्ये आत्रेयि (२) कुतः पुनरिहागम्यते किम्प्रयोजनो वा दण्डकारण्यप्रचारः (३) ।

आत्रेयी । अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तु निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्य्यटामि (ख) ॥

(क) वृत्तिः व्यवहारः प्रियप्राया प्रायेण भूम्ना प्रिया अतिप्रीतिकरीति यावत् वाचि वाक्प्रयोगे नियमः प्रकारः विनयेन मधुरः कोमल विनयालङ्कृत तया साधूनामालापो नितरां श्रुतिसुखकर इत्यर्थः मतिः बुद्धिः प्रकृत्या स्वभावेन कल्याणी मङ्गलमयी कल्याणकरेष्वेव विषयेषु साधूनां मतिः प्रवर्त्तते इत्यर्थः परिचयः प्रणय अविगीतः अनिन्दितः दोषसंसर्गशून्य इति यावत् पुरः प्रथमे वा पश्चात् चरमे वा अविपर्य्यासितः विपर्य्ययमप्राप्तः एकरूप इति यावत् रस. भावः यस्य तत् तथोक्तम् अनुपधि अकपटम् विशुद्धं रसान्तरेणासंस्पृष्टम् तत् इदम् अनिर्व्वचनीयं साधूनां रहस्य प्राकृतजनानामविज्ञेयं चरितं विजयते उत्कर्षेण लौकिकत्वेन वर्त्तते ।

(ख) उद्गीथविदः— उद्गीथः सामवेदस्यांशविशेषः तं विदन्ति ये ते तथोक्ताः

(१) कां पुनरत्रभवतीम् । १ । २ । ३ ।
कां पुनर्भवतीम् । ४ ।

(२) आत्रेयि । १ । २ । ४ ।
आर्य्ये आत्रेयि । ३ ।

(३) किम्प्रयोजनो वा दण्डकारण्यप्रचारः । १ । ३ । ४ ।
किं प्रयोजनं वा दण्डकारण्य प्रवेशः । २ ।

वनदेवता। यदा (१) तावदन्येऽपि मुनयस्तमेव हि (२) पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत् कोऽयमार्य्याया (३) दीर्घप्रवासप्रयासः (४) (क)।

आत्रेयी। तत्र महानध्ययनप्रत्यूह इति एष दीर्घप्रवासोऽङ्गीकृतः (५)।

वनदेवता। कीदृशः।

आत्रेयी। तस्य भगवतः केनापि देवताविशेषेण सर्व्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्त्तमानं दारकद्वयमुपनीतम् तत् खलु न केवलमृषीणाम् अपितु, सचराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति (६) (ख)।

उद्गीथाध्येतार इत्यर्थ। निगमान्तविद्याम्— निगमाः वेदाः तेषाम् अन्ताः चरमभागाः वेदान्ताः उपनिषदः तद्रूपां विद्याम्।

(क) पुराणब्रह्मवादिनम् - पुराणः पुरातनः ब्रह्म वेदम् वदति उपदिशति असौ ब्रह्मवादी पुराणश्च स ब्रह्मवादी च तं तथोक्तम् सर्व्वजनप्रख्यात वेदाध्यापकमित्यर्थः। प्राचेतसम् प्रचेतसः तन्नामधेयस्य प्रजापतेः अपत्यं पुमान् तम्। ब्रह्मपारायणाय— पारायणं पारगमनं ब्रह्मणः वेदस्य पारायणम् आदित आरभ्य अन्त यावत् अध्ययनं तस्मै समग्रं वेदमध्येतुमित्यर्थ।

(ख) आन्तराणि तत्त्वान्युपस्नेहयति - आन्तराणि अभ्यन्तरवर्त्तीनि

(१) यदा।१।३।४। यदि।२।
(२) एव हि।१।२।४। एव।३।
(३) तत् कोऽयमत्रार्य्याया।१।२।४। तत कोऽयमार्य्याया।३।
(४) एष दीर्घप्रवासः।१।४। दीर्घप्रवासः।२। एष दीर्घप्रवासोऽपि।३।
(५) दीर्घप्रवासप्रयासः।१।२।४। दीर्घप्रवासः।३।
(६) स्तन्यत्यागमात्रके वयसि वर्त्तमानं दारकद्वयमुपनीतं तत् खलु न केवलमृषीणाम् अपितु सचराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति।१।२।४। दारकद्वयमुपनीतं स्तन्यत्यागमात्रके वयसि वर्त्तमान तत् केवलमृषीणामेव न किन्तु तिरश्चां भूतानामभ्यन्तराण्युपस्नेहयति।३।

वनदेवता। अयि तयोर्नामसंविज्ञानमस्ति।

आत्रेयी। तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः (क)।

वनदेवता। कीदृशः प्रभावः।

आत्रेयी। तयोः किल(१) सरहस्यजृम्भकास्त्राणि आजन्मसिद्धानीति।

वनदेवता। इति हि भोश्चित्रम् (२)।

आत्रेयी। तौ च भगवता वाल्मीकिना धात्रीकर्म्मवस्तुतः(३) परिगृह्य पोषितौ परिरक्षितौ च दृत्तचूडौ च त्रयीवर्ज्जमितरा विद्याः सावधानेन परिपाठितौ (४) समनन्तरञ्च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय गुरुणा (५) त्रयीविद्यामध्या-

तत्त्वानि भावान् अन्तःकरणवृत्तीरिति यावत् उपस्नेहयति स्नेहप्रवणानि करोति तयोरवलोकितयोः सर्व्वेषामेव चेतसि स्नेहसञ्चारो भवतीति भावः।

(क) कुशलवाविति नामनी— रघुवंशे

स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया।
कविः कुशलवावेव चकार किल नामतः॥ १५। ३२॥

(१) तयोः। १।
तयोः किल। २। ३। ४।

(२) भोश्चित्रमेतत्। १।
अहो नु भोश्चित्रमेतत्। २।
इति हि भोश्चित्रम्। ३।
इति हि भोश्चित्रमेतत्। ४।

(३) धात्रीकर्म्मवस्तुतः। १। ३। ४।
धात्रीकर्म्मवस्तुताम्। २।

(४) दृत्तचौडकर्म्मणोश्च तयोस्त्रयीवर्ज्जमितरास्त्रविद्याः सावधानेन परिनिष्ठापितौ। १।
दृत्तचौडकर्म्मणोश्च तयोस्त्रयीवर्ज्जमितरा विद्याः सावधानेन परिनिष्ठापिताः। २।
दृत्तचूडौ च त्रयीवर्ज्जमितरास्त्रिस्रो विद्याः सावधानेन परिपाठितौ। ३।
दृत्तचौडकर्म्मणोश्च तयोस्त्रयीवर्ज्जमितरास्त्रिस्रो विद्याः सावधानेन परिनिष्ठापिताः। ४।

(५) गुरुणा। १। ३। ४। तौ। २।

पितौ । न चैताभ्यामतिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययन-योगोऽस्ति (१) (क) । यतः

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च (२) खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति(३) वा ।
भवति च तयोर् (४) भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥ ४ ॥

वनदेवता । अयमसावध्ययनप्रत्यूहः (५) ।

आत्रेयी । अपरश्च (६) ।

वनदेवता । अथापरः कः ।

आत्रेयी । अथ स ब्रह्मर्षिरेकदा (७) माध्यन्दिनसमये नदीं तमसामनुप्रपन्नः (८) तत्र च युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन

(क) धात्रीकर्म्मवस्ततः धात्रीकर्म्मरूपात् व्यापारात् तादृशं व्यापार-मारभ्येत्यर्थः । वृत्तचूडौ— वृत्ता निष्पन्ना चूडा ययोः तौ तृतीये वर्षे निर्वृत्त-चूडाकरणसंस्कारौ कुलधर्म्मानुसारेण एकां तिस्रः पञ्च वा शिखा वर्ज्जयित्वा वेदोक्तविधिना शिरसो मुण्डनं चूडाकरणसंस्कारः । त्रयीवर्ज्जम्— त्रयी ऋग्यजुःसामरूपं वेदत्रयं तां वर्ज्जयित्वा उपनयनात् पूर्व्वं वेदाध्ययनस्याविधत्वात् तद्वर्ज्जनम् । क्षात्रेण कल्पेनोपनीय— क्षात्रेण क्षत्रियाणामुपदिष्टेन कल्पेन विधिना उपनीय उपनयनसंस्कारेण संस्कृत्य ।

(१) सहाध्ययनयोगोऽस्ति ।१।२।४। सहाध्ययनं भवति । ३ ।
(२) नच । १ । ४ । ननु । २ । ३ ।
(३) अपहन्ति ।१।२।३। उपहन्ति ।४।
(४) पुनः । १ । २ । ४ । तयोः । ३ ।
(५) अध्ययनविघ्नः । १ । २ । ४ । अध्ययनप्रत्यूहः । ३ ।
(६) अपरश्च ।१।२।४। अयमपि । ३ ।
(७) स ब्रह्मर्षिरेकदा । १ । २ । ४ । भगवान् प्राचेतसः । ३ ।
(८) अनुप्राप्तः । १ । ३ । अनुप्रपन्न । २ । ४ ।

विध्यमानमपश्यत् (१) आकस्मिकप्रत्यवभासाञ्च देवीं वाच-मव्यतिकीर्णामनुष्टुप्छन्दसा परिच्छिन्नामभ्युदैरयत् (२) (क)

मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् (ख)॥

वनदेवता। चित्रमाम्नायादन्यो नूतनश्छन्दसामवतार (ग)।

(क) आकस्मिकप्रत्यवभासाम्— आकस्मिकः अकस्मान्निष्पन्नः प्रत्यवभासः आविर्भावः अस्याः तां तथोक्ताम् वाल्मीकिमुखात् अकस्मादाविर्भूतामित्यर्थः। अव्यतिकीर्णाम् अनन्वयाविस्पष्टत्वादिदोषविमुक्ताम्। अनुष्टुप्छन्दसा परिच्छिन्नाम्— अष्टाक्षरसंख्यातैकैकचरणरूपं वृत्तम् अनुष्टुप्छन्दः तेन परिच्छिन्नां नियमिताम् अनुष्टुप्छन्दोनिबद्धामित्यर्थः।

(ख) शाश्वतीः समाः— शश्वत् सदा भवाः शाश्वत्यः शाश्वतीः समाः सदातनान् परिवत्सरान् नित्यकालमित्यर्थः।

(ग) आम्नायादन्यो नूतनश्छन्दसामवतारः— आम्नायते गुरुमुखादुपश्रुत्य अभ्यस्यते इति आम्नायः वेदः तस्मादन्यो तत्र दृश्यमानेभ्यो विलक्षणः नूतनः अभिनवः छन्दसाम् अवतारः आविर्भावः। मन्त्रादिवेदभागोऽपि छन्दोनिबद्धः किन्तु वैदिकानि छन्दांसि पादवर्णवैषम्ययतिभङ्गादिदोषाक्रान्तानि मा निषादेति श्लोकस्तु तद्दोषरहित इति तेभ्यो विलक्षणतया तस्य नूतनत्वनिर्देशः सङ्गच्छते।

(१) व्याधेन विध्यमानं शकुन्तमपश्यत्।१।४।
व्याधेन विध्यमानं ददर्श।२।
व्याधेन हन्यमानं क्रौञ्चमपश्यत्।३।

(२) देवीं वाचमव्यतिकीर्णवर्णामानुष्टुभेन छन्दसा परिच्छिन्नामभ्युदैरयत्।१।४।
देवीं वाचमानुष्टुभेन छन्दसा परिणतामभ्युदैरयत्।२।
देवीं वाचमव्यतिकीर्णामनुष्टुप्छन्दसा परिच्छिन्नामभ्युदैरयत्।३।

तापसी। तेन खलु पुनः समयेन तं भगवन्तमाविर्भूत-शब्दब्रह्मप्रकाशमृषिमुपगम्य(१) भगवान् भूतभावनः पद्मयोनि-रवोचत् ऋषे प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तत् ब्रूहि राम-चरितम् अव्याहतज्योतिरार्षं ते प्रातिभं चक्षुः (२) आद्यः कविरसि इत्युक्त्वा तत्रैवान्तर्हितः (३)। अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं ऋषिः प्रणिनाय (४) (क)।

(क) आविर्भूतशब्दब्रह्मप्रकाशम् - आविर्भूत मा निषाद प्रतिष्ठामित्यादिना नूतनेन प्रकारेण निष्पन्नः शब्दब्रह्मणः प्रकाशः उदयः यस्मात् तं तथोक्तम्। अव्याहतज्योतिरार्षं ते प्रातिभं चक्षुः ऋषीणामिदम् आर्षम् प्राकृतमानुषेष्वलक्षितमित्यर्थः प्रातिभम् प्रतिभा बुद्धिः ज्ञानमिति यावत् तदात्मकं ते तव चक्षुः त्वदीयं ज्ञानमयं नेत्रम् अव्याहतं केनापि कारणेन अप्रतिहतं ज्योतिरस्य तत् तथोक्तं भविष्यतीति शेषः अतःपरं त्वं ज्ञानमयेन चक्षुषा सर्वं प्रत्यक्षवत् द्रक्ष्यसि न किञ्चित् तवाविज्ञातं भविष्यतीति भावः। अत्र रामायणम्

> तमुवाच ततो ब्रह्मा प्रहसन् मुनिपुङ्गवम्।
> श्लोक एव त्वया बद्धो नात्र कार्या विचारणा॥ १। २। ३३।
> मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती।
> रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम॥ १। २। ३४॥
> धर्मात्मनो गुणवतो लोके रामस्य धीमतः।
> वृत्तं कथय धीरस्य यथा ते नारदात् श्रुतम्॥ १। २। ३५

(१) उपसंक्रम्य।१।४। उपसङ्गम्य।२। उपगम्य।३।

(२) आर्षं ते प्रातिभं चक्षुः।१।२।४। आर्षं ते चक्षुः प्रतिभातु।२।

(३) तत्रैवान्तर्हितः।१।३।४। अन्तर्हितः।२।

(४) रामायणमृषिः प्रणिनाय।१।४। रामायणमृषिः प्रणीतवान्।३। रामायणं प्रणिनाय।२।

वनदेवता । हन्त पण्डितः संसारः (१) ।

आत्रेयी । तस्मादवोचं महानध्ययनप्रत्यूह इति (२) ।

वनदेवता । युज्यते ।

आत्रेयी । विश्रान्तास्मि भद्रे (३) सम्प्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

वनदेवता । इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन (४) गोदावरीतीरेण ।

आत्रेयी । सवाष्पम् (५) । अप्येतत्तपोवनम् अप्येषा पञ्चवटी अपि सरिदियं गोदावरी अप्ययं गिरिः प्रस्रवणः अपि जनस्थानदेवता वासन्ती त्वम् (६) ।

वासन्ती । अस्त्येतत् सर्व्वम् ।

> रहस्यञ्च प्रकाशञ्च यद्वृत्तं तस्य धीमतः ।
> रामस्य सहसौमित्रे राक्षसानाञ्च सर्व्वशः ॥ १ । २ । ३६ ॥
> वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ।
> तच्चाप्यविदितं सर्व्वं विदितं ते भविष्यति ॥ १ । २ । ३७ ॥
> न ते वागनृता काव्ये मत्प्रसादाद्भविष्यति ।
> कुरु रामकथां दिव्यां श्लोकबद्धां मनोरमाम् ॥ १ । २ । ३८ ॥

(१) हन्त तर्हि पण्डितः संसारः ।१।२।४।
हन्त पण्डितः संसारः । ३ ।

(२) तदनुरोधात्प्रस्तव हि महानध्ययनप्रत्यूह इति । १ । ४ ।
तत्र महानध्ययनप्रत्यूह इति ।२।
महानध्ययनप्रत्यूह इति । ३ ।

(३) विश्रान्तास्मि भद्रे । १ । २ । ४ ।
विश्रान्तास्मि । ३ ।

(४) एतेन । १ । अनेन । २ । ३ । ४ ।

(५) सवाष्पम् ।१।३।४। सवाष्पा ।२।

(६) अपि जनस्थानदेवता । १ । ३ ।
अपि वनदेवता जनस्थानवासिनी ।२।
अपि जनस्थानवनदेवता । ४ ।

आत्रेयी । वत्से जानकि

स एष ते वल्लभबन्धुवर्गः
प्रासङ्गिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः (१)
प्रत्यक्षदृश्यामिव नः करोति (क) ॥

वासन्ती । सभयं स्वगतम् । कथं नामशेषामित्याह । प्रकाशम् (२) । आर्य्ये किमत्याहितं सीतादेव्याः ।

आत्रेयी । न केवलमत्याहितं सापवादमपि । कर्णे । एवमेवम् (३) ।

वासन्ती । अहह दारुणो दैवनिर्घातः (ख) ।

इति मूर्च्छति ।

आत्रेयी । भद्रे समाश्वसिहि समाश्वसिहि ।

(क) प्रासङ्गिकीनां विषयः कथानाम्— प्रासङ्गिकीनाम् प्रसङ्गादागतानां कथानां विषयः गोचरीभूतः इतः पञ्चवटीमनुप्रविश्य गम्यतामित्यादिना प्रसङ्गक्रमेणोल्लिखित इत्यर्थः । नामशेषाम्— नाम सातेत्यभिधानमात्रं शेषम् अवशिष्टम् अस्याः तां तथोक्ताम् मृतामित्यर्थः ।

(ख) दारुणो दैवनिर्घातः— दारुणः भयङ्करः दुर्विषह इति यावत् दैवस्य विधेः निर्घातः निग्रहः ।

(१) वर्त्तमानाम् । १ । ४ ।
दृश्यमानः । २ । ३ ।

(२) सभयम् । कथं नामशेषामित्याह । १ । ३ । ४ ।
सभयं स्वगतम् । कथं नामशेषामित्याह । प्रकाशम् । २ ।

(३) आत्रेयी । न केवलमत्याहितं सापवादमपि । कर्णे । एवमेवम् । १ । ३ । ४ ।
आत्रेयी । न केवलमत्याहितं सापवादमपि । वासन्ती । कथमिव । आत्रेयी । कर्णे । एवमेवम् । २ ।

वासन्ती । हा प्रियसखि हा महाभागे ईदृशस्ते निर्म्माण-भागः । रामभद्र रामभद्र । अथवा अलं त्वया । आर्य्ये आत्रेयि अथ (१) तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः (२) (क) ।

आत्रेयी । नहि नहि ।

वासन्ती । हा कष्टमरुन्धतीवशिष्ठाधिष्ठितेषु रघुकदम्ब-केषु(३) जीवन्तीषु प्रवृद्धासु राज्ञीषु(४) कथमिदं जातम् (ख) ।

आत्रेयी । ऋष्यशृङ्गाश्रमे(५) गुरुजनस्तदासीत् । सम्प्रति तु (६) परिसमाप्तं तत् द्वादशवार्षिकं सत्रम् ऋष्यशृङ्गेण विस र्जिताश्च सम्पूज्य गुरवः (७) । ततो भगवत्यरुन्धती नाहं बधू-

(क) ईदृशस्ते निर्म्माणभागः— ते तव निर्म्माणभागः त्वन्निर्म्माणरूपो विधातुः कार्य्यांशः ईदृशः ईदृक्तया परिणतः विधात्रा त्वयि तादृशी लोकाति शायिनी रूपगुणसम्पत् समावेशितासीत् तामिदानीमीदृशं विरूपमवस्थान्तरं प्रापय्य तेन सर्व्वथा विवेकवत्तिर्मुखमाचरितमिति भावः ।

(ख) रघुकदम्बकेषु— रघूणां रघुवंशोद्भवानां कदम्बकानि समूहाः रामा-दयः तेषु रघुकुले इति यावत् ।

(१) अत्र । १ । २ । ४ । ततः । ३ ।

(२) काचिदस्ति प्रवृत्तिः । १ । २ । ४ ।
काचिदासीत्तदा प्रवृत्तिः । ३ ।

(३) अरुन्धतीवशिष्ठाधिष्ठितेषु रघु-कदम्बकेषु । १ । ३ । ४ ।
आर्य्यारुन्धतीवशिष्ठाधिष्ठिते रघु-कुलगृहे । २ ।

(४) जीवन्तीषु प्रवृद्धराज्ञीषु । १ ।
जीवन्तीषु च प्रवृद्धराज्ञीषु । २ ।
जीवन्तीषु प्रवृद्धासु राज्ञीषु । ३ । ४ ।

(५) ऋष्यशृङ्गाश्रमे । १ । ३ । ४ ।
ऋष्यशृङ्गसत्रे । २ ।

(६) सम्प्रति । १ । २ । ४ ।
सम्प्रति तु । ३ ।

(७) ऋष्यशृङ्गेण च सम्पूज्य विस-र्ज्जिता गुरवः । १ । २ । ४ ।
ऋष्यशृङ्गेण विसर्ज्जिताश्च सम्पूज्य गुरवः । ३ ।

विरहिताऽयोध्यां गमिष्यामीत्याह तदैव राममातृभिरनुमोदितम् तदनुरोधाद्भगवतो वशिष्ठस्य परिशुद्धा वाचः (१) यथा वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति (क)।

वासन्ती। अथ स राजा किमारम्भः सम्प्रति (२)।

आत्रेयी। तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः (३)।

वासन्ती। हा धिक् परिणीतमपि (४) (ख)।

आत्रेयी। शान्तं शान्तम्(५)।

वासन्ती। का तर्हि यज्ञे सहधर्म्मचारिणी।

आत्रेयी। हिरण्मयी सीताप्रतिकृतिः।

वासन्ती। हन्त भोः

वज्रादपि कठोराणि मृदूनि कुसुमादपि।

(क) परिशुद्धा वाच — परिशुद्धाः सर्व्वथा निर्द्दोषाः वाचः कथा. उदचरन्निति शेषः।

(ख) परिणीतमपि — न केवलं निरपराधा जानकी निर्व्वासिता पुनर्दारपरिग्रहोऽपि कृत इत्यर्थः अपत्नीकस्य धर्म्मचरणेऽधिकारविरहात् सीताविरहितस्य रामस्य भार्य्यान्तरपरिग्रहं विना अश्वमेधानुष्ठानं न सम्भवतीति मत्वा तत्कारणाय शङ्कित.।

(१) परिशुद्धा वाच.।१।२।४।
परिशुद्धा वाक्।३।

(२) अथ स राजा किमाचारः सम्प्रति।१।४।
अथ स राजा किमारम्भः सम्प्रति।२।
अथ स राजा रामः किमारम्भः।३।

(३) तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः।१।२।४।
तेन हि राजा अश्वमेधं कर्त्तुमुद्यमः कृत।३।

(४) अहह धिक् परिणीतमपि।१।२।४।
हा धिक् परिणीतमपि।३।

(५) शान्तं शान्तम्।१।४।
शान्तं पापम्।२। शान्तम्।३।

लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति (१) ॥

आत्रेयी । विसृष्टश्च वामदेवाभिमन्त्रितो (२) मेध्योऽश्वः उपकल्पितास्च यथाशास्त्रं तस्य रक्षितारः तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुरवाप्त (३) दिव्यास्त्रसम्प्रदायश्चतुरङ्गबलान्वितः प्रहितः (४) (क) ।

वासन्ती । सस्नेहकौतुकास्त्रम् । कुमारलक्ष्मणस्यापि पुत्रः हन्त मातर्जीवामि जीवामि (५) ।

आत्रेयी । अत्रान्तरे ब्राह्मणेन मृतं पुत्रमारोप्य राजद्वारि (६) सोरस्ताड़मब्रह्मण्यमुद्घोषितम् (७) । ततो न

(क) वामदेवाभिमन्त्रितः— वामदेवेन तदाख्येन पुरोहितानामन्यतमेन महर्षिणा अभिमन्त्रितः वेदोदितैर्मन्त्रैर्यथावत् संस्कृतः । मेध्यः पवित्रः अश्वमेधार्ह इति यावत् । चतुरङ्गबलान्वितः— चत्वारि हस्त्यश्वरथपदातिरूपाणि अङ्गानि अंशाः यस्य तत् तादृशेन बलेन सैन्येन अन्वितः अनुयातः ।

(१) को नु विज्ञातुमर्हति । १ ।
को हि विज्ञातुमर्हति । २ । ४ ।
को हि विज्ञातुमीश्वरः । ३ ।
(२) वामदेवानुमन्त्रितः । १ । २ । ४ ।
वामदेवाभिमन्त्रित । ३ ।
(३) अवाप्त । १ । ३ । ४ । दत्त । २ ।
(४) साधनान्वितोऽनुप्रहितः ।१।४।
चतुरङ्गसाधनान्वितोऽनुप्रहित ।२।
चतुरङ्गबलान्वितः प्रहितः ।३।
(५) कुमारलक्ष्मणस्यापि पुत्रः हन्त मातर्जीवामि जीवामि । १ ।
कुमारलक्ष्मणस्यापि पुत्रः हन्त मातर्जीवामि । २ ।
कुमारलक्ष्मणस्यापि पुत्र इति मातर्जीवामि जीवामि । ३ । ४ ।
(६) मृतं पुत्रमारोप्य राजद्वारि ।१।४।
मृतं पुत्रमुत्क्षिप्य राजद्वारे । २ ।
राजद्वारि मृतं पुत्रमादाय । ३ ।
(७) सोरस्ताड़नम् । १ । २ ।
सोरस्ताड़म् । ३ । ४ ।

राजापचारमन्तरेण (१) प्रजायामकालमृत्युश्चरतीति (२) आत्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत् (क)

शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥

इत्युपश्रुत्य कृपाणपाणिः (३) पुष्पकं विमानमारुह्य सर्व्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिश्चरितुमारब्धवान् (४) ।

वासन्ती । शूद्रः शम्बूको नाम धूमपो (५) ऽस्मिन्नेव जनस्थाने तपश्चरति (६) तदपिनाम रामभद्रः पुनरिदं (७) वनमलङ्कुर्य्यात् ।

आत्रेयी । भद्रे गम्यतेऽधुना ।

(क) सोरस्ताड़म्— उरसः वक्षसः ताड़ः प्रहारः तेन सह यथा तथा पुत्रशोकार्द्दिततया कराभ्यां वक्षःस्थल मुहुर्मुहुः प्रहृत्येत्यर्थः । राजापचारम् — राज्ञः प्रजापालनेऽधिकृतस्य पुरुषस्य अपचारः धर्म्मव्यतिक्रमः तम् ।

(१) राजापचारम् । १ । २ ।
राजापराधम् । ३ । ४ ।

(२) प्रजायामकालमृत्युश्चरतीति । १ । ४ ।
प्रजास्वकालमृत्युश्चरतीति । २ ।
प्रजानामल्पकाले मृत्युश्चरतीति । ३

(३) इत्युपश्रुत्यैवात्मकृतकृपाणपाणिः । १ । ४ ।
इत्युपश्रुत्यैव कृपाणपाणिः । २ ।
इत्युपश्रुत्य कृपाणपाणिः । ३ ।

(४) जगत्पतिश्चरितुमारब्धवान् । १ । ४ ।
जगत्पतिः सञ्चरितुमारब्धवान् । २ ।
रामश्चरितुमारब्धः । ३ ।

(५) शूद्रः शम्बूको नाम धूमपः । १ । ४ ।
शम्बूको नाम धूमपः शूद्रः । २ । ३ ।

(६) तपश्चरतीति । १ । ४ ।
तपश्चरति । २ । ३ ।

(७) पुनरपीदम् । १ । २ । ४ ।
पुनरिदम् । ३ ।

वासन्ती। आर्य्ये आत्रेयि एवमस्तु(१)। कठोरीभूतस्तु दिवसः(२) तथाहि

कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्म्मस्रंसितबन्धनैः स्वकुसुमैरर्च्चन्ति गोदावरीम्।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्कान्त(३) कपोतकुक्कुटकुलाः कूले कुलायद्रुमाः (क)॥

इति निष्क्रान्ते।

## विष्कम्भकः।

(क) कूले कुलायद्रुमाः कूलवर्त्तिनः पक्षिणामावासवृक्षाः कण्डूलस्य कण्डू-युक्तस्य द्विपानां करिणां गण्डपिण्डस्य गण्डस्थलस्य कषणेन कण्डूविनय-नार्थं घर्षणेन यः उत्कम्पः परिचलनं तस्मात् सम्पातिभिः स्खलद्भिः घर्म्मेण निदाघेन स्रंसितं शिथिलितं बन्धनं वृन्तं येषां तैः तथोक्तैः स्वकुसुमैः निजपुष्पैः गोदावरीं नदीम् अर्च्चन्ति पूजयन्ति शोभयन्तीति यावत्। कुलायद्रुमान् विशिनष्टि छायेत्यादि छायासु अपस्किरमाणानाम् अन्नाहरणेच्छया भूमिम् आलिखतां विष्किराणां पक्षिणां मुखैः चञ्चुभि व्याकृष्टाः आकृष्य बहि-रानीताः कीटाः याभ्यः ताः तथाभूताः त्वचः वल्कलानि येषां ते तथोक्ताः तथा कूजत् अव्यक्तमधुरं रुवत् कान्तानां सुन्दराणां कपोतानां पारावतानां कुक्कुटा-नाञ्च कुलं समूहः येषु ते तथोक्ताः।

(१) आर्य्ये आत्रेयि एवमस्तु।१।४।
एवमस्तु।२।
आत्रेयि एवमस्तु।३।
(२) कठोरीभूतस्तु दिवसः।१।४।
कठोरीभूतोऽयं दिवसः।२।
कठोरीभूतो दिवसः।३।
(३) कान्त।१।३।४।
क्लान्त।२।

ततः प्रविशति (१) सदयोद्यतखड्गो रामभद्रः ।

रामः । रे (२) हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि दुर्व्वह-(३) गर्भखिन्न-
सीताप्रवासन(४) पटोः करुणा कुतस्ते (क) ॥

कथञ्चित् प्रहृत्य (५) । कृतं रामसदृशं कर्म्म अपि जीवेत् स ब्राह्मणपुत्त्रः (६) ।

प्रविश्य (७)

दिव्यपुरुषः । जयति जयति देवः ।
दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवितः शिशुरसौ (८) मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ (९) नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति (ख) ॥

(क) जीवातवे प्रत्युज्जीवनाय ।

(ख) दत्ताभये त्वयि यमादपि दण्डधारे - यमादपि दत्तम् अभयं येन तथोक्ते त्वयि दण्डधारे शिरश्छेदरूपं दण्डं विदधति सति मृतस्य ब्राह्मण-शिशोः सञ्जीवनात् यमादभयप्रदत्वम् । चरणौ नतस्ते - ते तव चरणौ नतः प्रणमति । नत इति नमतेर्वर्त्तमाने कर्त्तरि क्तः ।

---

(१) प्रविशति । १ । २ । ३ ।
प्रविशति पुष्पकस्थः । ४ ।

(२) हे । १ । ४ । रे । २ । ३ ।

(३) दुर्वह । १ । २ । ४ । निर्भर । ३ ।

(४) प्रवासन ।१।३।४। विवासन । २ ।

(५) अथ कथञ्चित् प्रहृत्य । १ । ३ । ४ ।
कथञ्चित् प्रहृत्य । ३ ।

(६) ब्राह्मणपुत्त्रः । १ । ४ ।
ब्राह्मणशिशुः । २ ।
ब्राह्मणडिम्भः । ३ ।

(७) प्रविश्य ।१।२।४। ततः प्रविशति ।३।

(८) शिशुरयम् ।१।२। शिशुरसौ ।३।४।

(९) शिरसा चरणौ । १ । २ । ४ ।
चरणौ शिरसा । ३ ।

राम:। इयमपि प्रियं न: (१) तदनुभूयतामुग्रस्य तपस: फलम् (२)।

यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च सम्भवा: (३)।
वैराजा नाम ते लोकास्तैजसा: सन्तु ते ध्रुवा: (४) (क)॥

शम्बूक:। युष्मत्पादप्रसादोपाय (५) एष महिमा (ख) ननु तपस: फलम् (६) अथवा महदुपकृतं तपसा

अन्वेष्टव्यो यदसि भुवने भूतनाथ: शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि।
क्रान्त्वा प्राप्त: स इह तपस: (७) सम्प्रसादोऽन्यथा चेत्
क्वायोध्याया: पुनरुपगमो दण्डकायां वने व: (ग)॥

(क) पुण्याभिसम्भवा: कठोरतपश्चरणजनितेन पुण्यसन्तानेनोपार्ज्जिता: आनन्दा: सुखानि यत्र तादृशा: मोदा: आह्लादाश्च यत्र ते तथाविधा: तैजसा: तेजोमया: न पुनर्भूर्लोकादिवत् पाञ्चभौतिका: विराज: ब्रह्मण: इमे वैराजा: नाम लोका: स्थानानि ते तव ध्रुवा: शाश्वता: सन्तु भवन्तु।

(ख) एष महिमा वैराजलोकप्राप्तिरूपमैश्वर्य्यम् युष्मत्पादयो: भवच्चरणयो: प्रसाद: अनुग्रह: उपाय: कारणं यस्य स: तथोक्त: यन्मयेदृशमचिन्तनीय-मैश्वर्य्यं लब्धम् भवच्चरणानुग्रह एव तत्र हेतुरित्यर्थ:।

(ग) भूतानां प्राणिनां नाथ:स्वामी शरण्य: रक्षिता भुवने जगति अन्वेष्टव्य:

---

(१) प्रियं न:।१।२।४। न: प्रियम्।३।
(२) उग्रतपस: फलम्।१।
उग्रस्य तपस: परिपाक:।२।
उग्रस्य तपस: फलम्।३।४।
(३) पुण्याभिसम्भवा:।१।३।४।
पुण्याश्च सम्पद:।२।
(४) शिवा:।१।४। ध्रुवा:।२।३।
(५) युष्मत्पादप्रसादनोपाय:।१।३।४।
युष्मत्पादप्रसादोपाय:।२।
(६) किमत्र तपस: फलम्।१।४।
किमत्र तपसा।२।
ननु तपस: फलम्।३।
(७) तपसाम्।१।२।४। तपस:।३।

राम: । किं नाम दण्डकेयम् (१) । सर्व्वतोऽवलोक्य (२) । आं (३)

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् (४) ।
एते तीर्थाश्रमगिरिसरिद्गर्भ-(५) कान्तारमिश्राः
सन्दृश्यन्ते परिचितभुवो (६) दण्डकारण्यभागाः (क) ॥

श्रवणमनननिदिध्यासनादिभिरनुसन्धेयः वृषलकं शूद्रं माम् अन्विष्यन् योजनानां शतानि क्रान्त्वा अतिक्रम्य यत् इह प्राप्तः आगतः असि इह अस्मिन् विषये सः तपसः मम तपश्चर्य्यायाः सम्प्रसादः अनुग्रहः फलमिति यावत् अन्यथा चेत् अयोध्यायाः दण्डकायां दण्डकाख्ये वने वः युष्माकम् पुनरुपगमः पुनरागमनं क्व न सम्भावित इत्यर्थः यद्यहं तपो नाचरिष्यम् भवानियद्दूरवर्त्तिनीं दण्डकां पुनर्नागमिष्यदिति भावः ।

(क) क्वचित् कस्मिंश्चिदंशे स्निग्धाः कोमलाः श्यामाः नीलवर्णाश्च तादृशाः नयनप्रीतिकरा इति यावत् अपरतः अपरस्मिन्नंशे भीषणः भयङ्करः आभोगः रूपं येषाम् ते तथोक्ताः रूक्षाः कर्कशाश्च तादृशाः दुर्दर्शा इति यावत् स्थाने स्थाने क्वचित् क्वचित् निर्झराणां शैलादधः पततां वारिप्रवाहाणाम् झाङ्कृतैः झां झाम् इत्याकारकैर्निनादैः मुखराः ध्वनन्त्यः ककुभः दिग्भागाः येषां ते तथोक्ताः तीर्थैः आश्रमैः गिरिभिः सरिद्भिः गर्भकान्तारैश्च मिश्राः सङ्कुलाः तीर्थादिबहुला इति यावत् परिचिताः अनुभूतपूर्व्वाः भुवः स्थानानि येषां ते तथोक्ताः दण्डकारण्यभागाः दण्डकारण्यप्रदेशाः सन्दृश्यन्ते लक्ष्यन्ते। अरण्य-मध्यवर्त्तीनि लघुवनानि गर्भकान्ताराणि ।

(१) दण्डकेयम् ।१।२।४। दण्डकेति ।३।
(२) अवलोक्य । १ । २ । ४ ।
अवलोक्य सहर्षम् । ३ ।
(३) आं कथम् । १ । आं । २ ।
हा कथम् । ३ । आः कथम् । ४ ।
(४) द्राङ्कृतैः । १ । झाङ्कृतैः । २ ।
व्याहृतैः । ३ । ध्वाङ्कृतैः । ४ ।
(५) गह्वर । १ । ४ । गर्त्त । २ । ३ ।
(६) परिचितसुखाः । १ ।
परिचितभुवः । २ । ३ । ४ ।

शम्बूकः। दण्डकेयम् अत्र किल पूर्व्वं निवसता(१) देवेन
चतुर्द्दश सहस्राणि रक्षसां भीमकर्म्मणाम् (२)।
तयश्च दूषणखरत्रिमूर्द्धानो रणे हताः (३)॥
येन सिद्धक्षेत्रे (४) जनस्थाने माद्दशामपि(५) भीरुजनानाम्(६) अकुतोभयः सञ्चारो जातः।

रामः। न केवलं दण्डका जनस्थानमपि (७)।

शम्बूकः। बाढम्। एतानि खलु सर्व्वभूतलोमहर्षणानि उन्मत्तचण्डश्वापदकुलसङ्कुल(८) गिरिगह्वराणि जनस्थानपर्य्यन्तदीर्घारण्यानि (९) दक्षिणां दिशमभिवर्त्तन्ते (१०) (क)।
तथाहि

(क) सर्व्वभूतलोमहर्षणानि— सर्व्वेषां भूतानां प्राणिनां लोमहर्षणानि लोमाञ्चकारीणि तान्यवलोकयतां हृदयं प्रभूतेन भयेनाभिभूतं शरीरञ्च लोमाञ्चपूर्णं भवतीति भावः। जनस्थानपर्य्यन्तदीर्घारण्यानि— जनस्थानस्य पर्य्यन्तभूतानि एकतो जनस्थानस्य सीमारूपेणावस्थितानीति यावत् दीर्घाणि अत्यायतानि अरण्यानि वनानि।

(१) निवसता।१।२।४। पूर्व्वं निवसता।३।

(२) चतुर्द्दश च राक्षसाः।१।३।४।
रक्षसां भीमकर्म्मणाम्।२।

(३) निपातिताः।१।४। रणे हताः।२।३।

(४) सिद्धक्षेत्रे।१।४।
सिद्धक्षेत्रेऽस्मिन्।२। सिद्धिक्षेत्रे।३।

(५) माद्दशानामपि।१।२।४।
माद्दशामपि।३।

(६) भीरुजानपदानाम्।१।२।४।
भीरुजनानाम्।३।

(७) न केवलं दण्डकेयं किन्तु जनस्थानमपि।१।
न केवलं दण्डकेयं जनस्थानमपि।२
न केवलं दण्डकारण्यं जनस्थानमपि।३।
न केवलं दण्डका जनस्थानमपि।४।

(८) श्वापदकुलसङ्कुल।१।२।
श्वापदकुलाक्रान्तविकट।३।
श्वा दकुल।४।

(९) जनस्थानपर्य्यन्तानि दीर्घारण्यानि।१।२।४।
जनस्थानपर्य्यन्तदीर्घारण्यानि।३।

(१०) दक्षिणां दिशमभिवर्त्तन्ते।१।२।४।
दक्षिणस्यां दिश्यभिवर्त्तन्ते।३।

निष्कूजस्तिमिताः क्वचित् क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरघोष-(१) भुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः पीयते (क)॥

रामः।

पश्यामि च जनस्थानं भूतपूर्व्वखरालयम्।
प्रत्यक्षानिव(२) वृत्तान्तान् पूर्व्वाननुभवामि च (ख)॥

सर्व्वतोऽवलोक्य। प्रियारामा हि सर्व्वथा (३) वैदेह्यासीत्।

(क) क्वचित् निष्कूजाः निःशब्दाश्च स्तिमिताः निश्चलाश्च ताः तथोक्ताः अत्यन्ततो विहगकूजितशशकसञ्चारादिराहित्यादिति भावः क्वचिदपि प्रोच्चण्डाः अत्युग्राः सत्त्वस्वनाः सत्त्वानां सिंहव्याघ्रप्रमुखानामारण्यजन्तूनां स्वनाः नादाः यासु ताः तथोक्ताः स्वेच्छया यदृच्छया सुप्तानां निद्रागतानां गभीरघोषाणां गम्भीरनादानां भुजगानां सर्पाणां श्वासैः प्रदीप्ताः अग्नयः दावानलाः यासु ताः तथोक्ताः सुप्तानां महाकायानाम् अजगरादीनां श्वास-निःसरणकाले गभीरः शब्दो भवति तमेवाभिसन्धाय गभीरघोषेति विशेषणं प्रयुक्तम् प्रदराणां गर्त्तानाम् उदरेषु अभ्यन्तरेषु विलसन्ति विद्यमानानि स्वल्पानि अत्यल्पमात्राणि अम्भांसि जलानि यासां ताः तथाविधाः सीमानः दीर्घारण्यानां प्रदेशाः यासु सीमसु तृष्यद्भिः तृष्णातुरैः प्रतिसूर्य्यकैः कृकलासैः अयम् अजगराणां स्वेदद्रवः घर्म्मनिष्यन्दः पीयते।

(ख) भूतपूर्व्वखरालयम्— भूतपूर्व्वः पूर्व्वं स्थितः खरस्य रावणानुचरस्य राक्षसविशेषस्य आलयः वसतिः यस्मिन् तत् तथोक्तम्।

(१) घोर।१।२।४। भोग।२।

(२) प्रत्यक्षमिव।१।३।४। प्रत्यक्षानिव।२।

(३) प्रियारामा हि सर्व्वथा।१।३।४। सर्व्वथा प्रियारामा हि।२।

एतानि तानि नाम कान्ताराणि किमितः परं भयानकं स्यात् (१) (क)। सास्रम्।

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।
इतिचारमतेवासौ(२) स्नेहस्तस्याः स तादृशः॥
अकिञ्चिदपि कुर्व्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः (ख)॥

शम्बूकः। तदलमेभिर्दुरासदैः (ग)। अथैतानि मदकल-

(क) प्रियारामा— प्रियः प्रीतिकरः आरामः वनं यस्याः सा तथोक्ता चिराभ्यस्ततया सा वनवासे निरतिशयं सुखमन्वभूदित्यर्थः। एतानि तानि - येषु प्रियया सह चिरमुषित्वा तादृशेन सुखेन कालोऽतिवाहित इत्यर्थः।

(ख) त्वया सह मधुगन्धिषु मधुगन्धपूर्णेषु वनेषु निवत्स्यामि विहरिष्यामि इतिच इत्येव एतावन्मात्रेणैवेत्यर्थः असौ सीता अरमत सुखमन्वभूत् इव तस्याः सीतायाः सः तादृशः अनिर्व्वचनीयः स्नेहः अनुरागः मयि आसीदिति शेषः तथाविधस्तस्या मयि स्नेहस्य महिमा यन्मया सह पुनर्वनेषु विहरिष्यतीति मत्वैव न पुनर्वस्तुतो वनेषु विहृत्य तया प्रभूतं सुखमनुभूतमिव। अथवा नैतच्चित्रम् यतः अकिञ्चिदपि कुर्व्वाणः किमपि प्रीतिकरं कर्म्म अकुर्व्वन्नपि सौख्यैः सन्निधिमात्रसम्भूतेन सुखसन्तानेन दुःखानि अपोहति निराकरोति प्रियजन इति शेषः यो हि यस्य प्रियः स्निग्धः जनः तत् तस्य किमपि द्रव्यं कश्चिदनिर्व्वचनीयः पदार्थः।

(ग) तदलमेभिर्दुरासदैः— दुरासदैः दुरधिगमैः दुर्द्धर्षैरिति यावत् एभिः दक्षिणां दिशमभिवर्त्तमानैः दीर्घारण्यैः अलम् तत्कथातिविस्तरः परिह्रियतामित्यर्थः।

(१) किमतःपरं भयानकम्।१।३।४। किमितःपरं भयानकं स्यात्।२।

(२) इति चारमतीवासौ।१। इति स्मा रमते सीता।२। इतीवारमतीवासौ।३।४।

मयूरकण्ठकोमलच्छविभिरवकीर्णानि पर्व्वतैः (१) अविरल-निविष्टनीलबहलच्छायतरुणतरुषण्डमण्डितानि असम्भ्रान्त-विविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमारण्यकानि (२)।(क)

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः (ख)॥

(क) मदकलानां मदमत्तानां हर्षातिरेकेण नदतामिति यावत् मयूराणां कण्ठस्येव कोमला चिक्कणा छविः कान्तिः येषां तैः तथोक्तैः पर्व्वतैः अवकीर्णानि सङ्कुलानि तादृशपर्व्वतबहुलानीति यावत् हर्षवशात् कूजनकाले मयूर-कण्ठानां चिक्कणत्वातिशयः सम्पद्यत इति मदकलेति विशेषणम् पर्व्वतानाञ्च विविधतरुगुल्मादिभिरावृततया तादृशच्छविशालित्वसम्भवः अविरलनिवि-ष्टानां घनसन्निविष्टानां नीलबहलच्छायानां नीलप्रधानकान्तीनां तरुणानाम् अनतिप्रौढानां तरूणां षण्डैः समूहैः मण्डितानि अलङ्कृतानि असम्भ्रान्तानि हिंस्रजन्तूनां सन्निधिविरहात् अव्याकुलानि विविधानां मृगाणां पशूनां यूथानि कुलानि येषु तानि तथाविधानि प्रशान्तानि निरुपद्रवाणि गम्भीराणि च मध्यमारण्यकानि जनस्थानमध्यवर्त्तीनि अरण्यानि महानुभावः पश्यतु।

(ख) इह एषु मध्यमारण्यकेषु समदैः हृष्टैः शकुन्तैः पक्षिभिः आक्रान्तानां व्याधूतानां वानीरवीरुधां वेतसलतानां प्रसवैः शकुन्ताक्रमणेन च्युतैः पुष्पैः सुरभीणि सम्पन्नसौरभाणि शीतानि शीतलानि स्वच्छानि अतिविम-लानि तोयानि जलानि यासां ताः तथोक्ताः फलभराणां फलसमूहानां परिणामेन परिपाकेण श्यामेषु नीलवर्णेषु जम्बूनिकुञ्जेषु जम्बूवनान्तेषु स्खल-

(१) पर्व्वतैः।१।३।४। पर्य्यन्तैः।२। कानि।१।२।४।
(२) प्रशान्तगम्भीराणि मध्यमारण्य- प्रशान्तगम्भीरारण्यानि।३।

अपिच ।

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः (क) ॥

रामः । सवाष्पसम्भ्रमम् । भद्र शिवास्ते पन्थानः देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः (१) ।

शम्बूकः । यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि ।

इति निष्क्रान्तः ।

रामः । एतत्तदेव हि पुनर्वनमद्य(२) दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।

नेन वेगप्रतिघातेन मुखराणि सशब्दानि भूरीणि प्रभूतानि स्रोतांसि यासां ताः तथोक्ताः निर्झरिण्यः गिरिनद्यः वहन्ति ।

(क) अत्र एतेषु मध्यारण्येषु कुहरभाजां गिरिविवरवर्त्तिनां भल्लूकयूनां तरुणवयसां भल्लूकानाम् अनुरसितात् गिरिकुहरे प्रतिध्वननवशात् गुरूणि महान्ति अम्बूकृतानि थुत्कारनिःसरणसहिताः शब्दाः स्त्यानं वृद्धिं गम्भीरत्वमिति यावत् दधति धारयन्ति किञ्च शल्लकीनां गजप्रियायां तटाख्यवृक्षविशेषाणां शिशिरः शीतलः कटुः तीक्ष्णः कषायः सुरभिश्च इभदलितानां गजभग्नानां विकीर्णानाम् इतस्ततो विक्षिप्तानां ग्रन्थीनां शाखानां निष्यन्दस्य क्षीरस्रवणस्य स्रुतस्य क्षीरस्येति यावत् गन्धः स्त्यायते प्रसर्पति ।

(१) शिवास्ते पन्थानः देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः ।।।२।
भद्र पन्थानः सन्तु ते शिवाः प्रतिविधीयस्व पुण्येभ्यो लोकेभ्यः ।३।
भद्र शिवास्ते पन्थानो देवयाना; प्रतिष्ठस्व पुण्येभ्यो लोकेभ्यः ।४।

(२) वनं पुनरद्य ।०१।२।
पुनर्वनमद्य ।३।४।

आरण्यकास्य गृहिणस्य रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः (क) ॥

अपिच ।

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनीलनिचुलानि सरित्तटानि (ख) ॥

मेघमालेव यश्चायमारादपि (१) विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी (ग) ॥

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु

(क) यस्मिन् वने पुरा पूर्व्वं चिरं दीर्घकालम् एव वसन्तः कृतनिवासाः वयम् स्वधर्म्मे रताः वानप्रस्थाश्रमोचितधर्म्मानुष्ठानपराः सांसारिकेषु गृहाश्रमोचितेषु सुखेषु च रसज्ञाः गृहीतरसाः तादृशं सुखमुपभुञ्जाना इति यावत् आरण्यकाः अरण्यसेविनः वानप्रस्था इति यावत् गृहिणः गृहाश्रमिणश्च अभूम बभूविम पित्राज्ञापरिपालनानुरोधेन अरण्यसमाश्रयणात् वानप्रस्थत्वम् सीतासहवासवशेन च गृहाश्रमित्वम् ।

(ख) आमञ्जुवञ्जुललतानि— आमञ्जवः अधिकमनोहराः वञ्जुललताः वेतसलताः येषु तानि तथोक्तानि । नीरन्ध्रनीलनिचुलानि— नीरन्ध्राः निरवकाशाः अविरलनिविष्टा इति यावत् नीलाः श्यामवर्णाः निचुलाः वृक्षविशेषाः येषु तानि तथोक्तानि ।

(ग) यश्च अयम् आरात् दूरात् अपि मेघमालेव जलदपंक्तिरिव विभाव्यते लक्ष्यते ।

---

(१) यश्चायम् ।१।२।४। यः श्यामः ।२।

गोदावर्य्याः पयसि वितत (१) श्यामलानोकहश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः (क) ॥

अत्रैव(२)सा पञ्चवटी यत्र चिरनिवासेन(३)विविधविस्रम्भाति-
प्रसङ्गसाक्षिणः प्रदेशाः(ख) प्रियायाः प्रियसखी वासन्ती च(४)
प्रतिवसति तत् किमिदमापतितमद्य रामहतकस्य(५) ।

सम्प्रतिहि

चिराद्वेगारम्भी (६) प्रसृत इव तीव्रो विषरसः
कुतश्चित् संवेगाच्चलित इव (७) शल्यस्य शकलः ।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्म्मणि पुन-
र्घनीभूतः शोको विकलयति मां नूतन इव (८)) (ग) ॥

(क) रम्यराजस्य जटायुषः । रताः भषिताः । वितता प्रतिविम्बिता । अन्तःकूजन्मुखरशकुनः— अन्तः अभ्यन्तरभागे कूजन्तः अव्यक्तं नदन्तः मुखराः चपलाः क्रीड़ासक्ता इति यावत् शकुनाः पक्षिणः यस्मिन् स तथोक्तः ।

(ख) यत्र चिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः— यत्र यस्यां पञ्चवट्यां चिरनिवासेन दीर्घावस्थानेन हेतुना विविधानां बहुविधानां विस्रम्भानां स्वच्छन्दविहाराणाम् अतिप्रसङ्गस्य अतिविस्तरस्य साक्षिणः साक्षिभूताः प्रदेशाः स्थलानि सन्तीति शेषः ।

(ग) चिरात् बहोः कालादनन्तरं वेगारम्भी वेगेनोद्यच्छमानः सन् प्रसृतः सञ्चरितः तीव्रः दुःसहः विषरस इव कुतश्चित् कुतोऽपि कारणात्

(१) वितत । १ । २ । ४ । वितत । ३ ।
(२) तदत्रैव ।१।४। आ तदत्रैव । २ ।
अत्रैव । ३ ।
(३) अतिचिरनिवासेन ।१।२।४।
चिरनिवासेन । ३ ।
(४) प्रियसखी च वासन्ती नाम वन-
देवता । १ । २ । ४ ।
प्रियसखी वासन्ती च । ३ ।
(५) रामस्य । १ । २ । ४ ।
रामहतकस्य । ३ ।
(६) चिरोद्वेगारम्भी । १ । २ । ४ ।
चिराद्वेगारम्भी । ३ ।
(७) निहित इव ।१।२।४। चलित इव।३।
(८) सम्मूर्च्छयति च । १ । २ ।
मां नूतन इव । ३ । ४ ।

तथापि तान् पूर्व्वसुहृदो भूमिभागान् पश्यामि । निरूप्य ।
अहो अनवस्थितो भूमिसन्निवेशः तथाहि (१)

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदम्
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥

हन्त परिहरन्तमपि मामितः पञ्चवटीस्नेहो (२) बलादाकर्षतीव (३) ।

सकरुणम् ।

यस्यां ते दिवसास्तया सह मया नीताः पुनः (४) स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत (५) ।
एकः सम्प्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः (६) पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा (७)(क) ॥

संवेगात् प्रभूतेन वेगेन चलितः शल्यस्य तीक्ष्णाग्रस्यास्त्रविशेषस्य शकलः खण्डः इव रूढः सञ्जातः ग्रन्थिः अस्य सः दृढबद्ध इत्यर्थः मर्म्मणि पुनः स्फुटितः विदीर्णः व्रणः विस्फोटः इव घनीभूतः सान्द्रीभूतः शोकः नूतनः अचिरोपनतः इव मां विकलयति विचेतनं करोति अन्तर्गूढो नितरामसन्तुदः सीतावियोग-शोकः पञ्चवटीदर्शनेन पुनर्नवीभावमापन्न इति भावः ।

(क) पुनः स्वे गृहे॰
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत ।—

(१) भूमिसन्निवेशः । १ । ३ । ४ ।
भूमिसन्निवेशः तथाहि । २ ।
(२) पञ्चवटीप्रदेशः । १ । ४ ।
पञ्चवटीस्नेहः । २ । ३ ।
(३) आकर्षतीव । १ । ३ । ४ ।
अपकर्षतीव । २ ।
(४) यथा । १ । २ । पुनः । ३ । ४ ।
(५) आस्थीयते।१।२। आस्थीयत । ३।४।
(६) तामद्य रामः कथं पापः ।१।२।४।
तामेव पापः कथं रामः । ३ ।
(७) असम्भावनाम् । १ । ४ ।
असम्भाव्य वा । २ । ३ ।

**प्रविश्य**

शम्बूकः । जयति जयति (१) देवः । देव भगवानगस्त्यो मत्तः श्रुतभवत्सन्निधानस्त्वां (२) त्वामाह परिकल्पितविमानावतरण(३) मङ्गला प्रतीक्षते वत्सला लोपामुद्रा(४) सर्व्वे चागस्त्यायनाः (५) तदेहि सम्भावयास्मान् अथ प्रजविना पुष्पकेण स्वदेशमुपगम्य (६) अश्वमेधाय सज्जो भविष्यसीति (७) (क) ।

राम । यथाज्ञापयति भगवान् (८) ।

शम्बूकः । इतस्तर्हि देवः प्रवर्त्तयतु पुष्पकम् ।

पुनः अनन्तरं स्वे गृहे अयोध्यायां दीर्घाभिः यस्याः पञ्चवट्याः सम्बन्धिनीभिः कथाभिः एव सततम् अस्थीयत स्थितम् वनवासात् प्रतिनिवृत्य सीतया सह यत्कथाप्रसङ्गेनैव मया कालोऽतिवाहित इत्यर्थः । असम्भाव्य असमादृत्य सहसा परित्यागे अनादरः प्रदर्शितः स्यादिति भावः ।

(क) परिकल्पितविमानावतरणमङ्गला— परिकल्पितम् अनुष्ठितं विमानावतरणकालोचितं मङ्गलं यया सा तथोक्ता । आगस्त्यायनाः अगस्त्यसम्बन्धिनः अगस्त्याश्रमवासिनो वा ।

(१) जयति । १ । २ ।
जयति जयति । ३ । ४ ।
(२) श्रुतभवत्संविधानः । १ ।
श्रुतभवत्सन्निधानः । २ । ३ । ४ ।
(३) विमानावतरण । १ । २ ।
रथावतरण । ३ ।
अनवरताभरण । ४ ।
(४) वत्सला लोपामुद्रा । १ । २ । ४ ।
भगवती वत्सला लोपामुद्रा । ३ ।
(५) आगस्त्यायनाः । १ ।
महर्षयः । २ ।
अगस्त्यप्रभृतयः । ३ ।
अगस्त्यादयः । ४ ।
(६) उपगम्य । १ । ३ । ४ ।
उपसङ्गम्य । २ ।
(७) भविष्यसीति । १ । २ । ४ । भव । ३ ।
(८) भगवान् । १ । २ । ४ ।
भगवानगस्त्यः । ३ ।

रामः । भगवति पञ्चवटि गुरुजनोपरोधात् क्षणं क्षम्यता-
मतिक्रमो रामस्य (क) ।

शम्बूकः । देव पश्य पश्य

गुञ्जत्(१) कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिण(२) तरुस्कन्धेषु कुम्भीनसाः (ख) ॥

अपिच

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो(३)
मेघालङ्कृत(४) मौलिनीलशिखराः क्षौणीभृतो दक्षिणाः ।

(क) गुरुजनोपरोधात् गुरुजनानामादेशप्रतिपालनानुरोधात् । अति-
क्रमः चिरपरिचितसुहृदुचिताचारलङ्घनम् सहसा इतः प्रस्थानरूपम् ।

(ख) गुञ्जन्तीनाम् अव्यक्तं नदन्तीनां कुञ्जरूपेषु कुटीरेषु वसन्तीनां कौशिक-
घटानां पेचककुलानां घुत्कारवत्सु घुत् इत्याकारकशब्दवत्सु कीचकस्तम्बा-
डम्बरेषु वायुयोगेन कूजतो वेणुविशेषस्य स्तम्बानाम् गुच्छानाम् आडम्बरेषु
प्रपञ्चेषु मूकानि कौशिकत्रासेन निःशब्दमवतिष्ठमानानि मौकुलीनां काकानां
कुलानि यस्मिन् सः तथोक्तः अयं पुरोवर्त्ती क्रौञ्चावतः तन्नामधेयो गिरिः एत-
स्मिन् क्रौञ्चावते प्रचलताम् इतस्ततः परिधावताम् प्रचलाकिनां मयूराणां
कूजितैः केकाभिः उद्वेजिताः भयमापादिताः कुम्भीनसाः सर्पाः पुराणानां
पुरातनानां रोहिणतरूणां वटवृक्षाणां स्कन्धेषु प्रकाण्डदेशेषु उद्वेल्लन्ति
विचलन्ति आकुलीभवन्तीति यावत् ।

---

(१) कूजत् । १ । २ । गुञ्जत् । ३ । ४ । (३) वारय । १ । २ । ३ । वीचयः । ४ ।
(२) रोहिण।१।४। चन्दन।२। रोहित।३। (४) मेघालम्बित।१।२।४। मेघालङ्कृत।३।

अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः (क) ॥

इति निष्क्रान्तौ (१)।

पञ्चवटीप्रवेशो नाम

द्वितीयोऽङ्कः (२)।

(क) कुहरेषु विवरेषु गद्गदम् अव्यक्तं नदन्ति शब्दायमानानि गोदावर्य्याः सरितः वारीणि जलानि येषां ते तथोक्ताः मेघैः अलङ्कृताः आश्लिष्टाः मौलयः शिरोभागाः येषां, तानि अतएव नीलानि श्यामलानि शिखराणि शृङ्गाणि येषां ते तथोक्ताः दक्षिणाः दक्षिणदिगवस्थिताः ते एते भवतां परिचितपूर्व्वाः क्षौणीभृतः भूधराः। अन्योन्यप्रतिघातेन परस्परप्रतिरोधेन सङ्कुलम् उच्छृङ्खलं चलतां कल्लोलानां तरङ्गाणां कोलाहलैः कलकलैः उत्तालाः दुर्द्धर्षाः गभीरपयसः गम्भीरजलाः पुण्याः पवित्राः ते इमे पूर्व्वपरिचिताः सरितां नदीनां सङ्गमाः जलसन्निपाताः।

(१) निष्क्रान्ताः सर्व्वे। १। २। ४।
इति निष्क्रान्तौ। ३।

(२) द्वितीयोऽङ्कः। १। ३। ४।
इति पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः। २।

# तृतीयोऽङ्कः

ततः प्रविशति नदीद्वयं तमसा मुरला च ।

तमसा । सखि मुरले किमसि सम्भ्रान्तेव ।

मुरला । भगवति तमसे प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् जानास्येव यथा वधूत्यागात् प्रभृति

अनिर्भिन्न(१) गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः (क) ॥

तेन च तथाविधेष्टजनकष्टविनिपात(२) जन्मना प्रकर्षगतेन दीर्घशोकसन्तानेन (३) सम्प्रति नितरां परिक्षीणो (४) राम-

(क) अनिर्भिन्नात् अविचलितात् गभीरत्वात् गाम्भीर्यात् हेतो' गाम्भीर्य।'तथ्यवशादिति यावत् अन्तर्गूढा वहिरप्रकाशमाना घना गाढा व्यथा यस्मिन् स तथोक्त रामस्य करुणो रसः प्रियावियोगनिबन्धनः शोकसम्भार पुटपाकप्रतीकाशः मृदादिना बद्धमुख पात्रं पुट' तस्मिन् पाकः औषधादीनां सन्तापनम् तत्प्रतीकाश' तद्वत् प्रतिभाति यथा पुटाभ्यन्तरे पच्यमानस्य वस्तुन सन्तापो वहिर्नोपलक्ष्यते रामस्य दुःसहशोकोऽपि तथैवासीदित्यर्थ ।

(१) अनिर्भिन्न । १ । ३ । ४ ।
अनिर्भिन्नो । २ ।

(२) विनिपात' १ । ४ ।
पात । २ ।
परिपाक । ३ ।

(३) सन्तापेन । १ ।
सन्तानेन । २ । ३ । ४ ।

(४) सम्प्रत्यपि तनुतरां परिक्षीणा' ।१।२।
सम्प्रति परं परिक्षीयमाण।३।
सम्प्रति नितरां परिक्षीणा । ४ ।

भद्रः तमवलोक्य कम्पितमिव मे हृदयम्.(१) अधुना च प्रति निवर्त्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहवास-(२) विस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः तेषु च निसर्गधीरस्यापि एवंविधायामवस्थायाम् अतिगम्भीराभोगशोकक्षोभसंवेगात् पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि रामभद्रस्य,तद्भगवति गोदावरि त्वया(३) सावधानया भवितव्यम् (क)

वीचिवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान्।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेषितैस्तर्पयेति॥

(क) तथाविधेष्टजनकष्टविनिपातजन्मना - तथाविधः तादृशः इष्टजने प्रियजने जनकतनयायामितियावत् यः कष्टविनिपातः अनिष्टसङ्घटनम् तस्मात् जन्म उत्पत्तिः यस्य तेन सीतानिर्व्वासनसम्भूतेनेत्यर्थः। प्रकर्षगतेन- प्रकर्षम् आतिशय्यं गतेन प्राप्तेन अत्यारूढेनेत्यर्थः। दीर्घशोकसन्तानेन— दीर्घेण अविच्छिन्नेन निरवधिना वा शोकसन्तानेन शोकसञ्चारेण। प्रतिनिवर्त्तमानेन शम्बूकवधात् अयोध्यां प्रतिगच्छता। वधूसहवासविस्रम्भसाक्षिणः— वध्वा सीतया सार्द्धम् सहवासस्य एकत्रावस्थानस्य विस्रम्भस्य स्वच्छन्दविहारस्य च साक्षिणः साक्षिभूताः। अतिगम्भीराभोगशोकक्षोभसंवेगात्— अतिगम्भीरः दुर्निवारः दुःसहो वा आभोगः प्रसरः यस्य तादृशेन शोकेन क्षोभः अभिभवः तस्य संवेगात् वेगातिशयात् आतिशय्यादिति यावत्। प्रमादस्थानानि— 'प्रमादः बुद्धिविपर्य्ययः धैर्य्यच्युतिरिति यावत् तस्य स्थानानि पदानि कारणानीति यावत्।

(१) हृदयम्।१।२।४। समस्थलं हृदयम्।३।

(२) सहनिवास।१।२।४। सहवास।३।

(३) तत् त्वया।१।२।४। त्वया।३।

तमसा । उचितमेव दाक्षिण्यं स्नेहस्य सञ्जीवनोपायस्तु मौलिक (१) एव रामभद्रस्याद्य सन्निहितः (क) ।

मुरला । कथमिव ।

तमसा । श्रूयताम् पुरा किल वाल्मीकितपोवनोपकण्ठात् परित्यज्य गते (२) लक्ष्मणे सीतादेवी प्राप्तप्रसववेदन (३) मात्मानम् अतिदुःखसंवेगाद्गङ्गाप्रवाहे निक्षिप्तवती तदैव तत्र (४) दारकद्वयं प्रसूता भगवतीभ्यां पृथ्वीभागीरथीभ्याम् (५) अभ्युपपन्ना रसातलञ्च नीता स्तन्यत्यागात् परेण च तत् दारकद्वयं तस्याः (६) प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती (ख) ।

मुरला । सविस्मयम् (७) ।

ईदृशानां विपाकोऽपि जायते परमाद्भुतः (८) ।
यत्रोपकरणीभावमायात्येवंविधो जनः (ग) ॥

(क) दाक्षिण्यम् अनुकूलकारित्वम् । मौलिकः मूलीभूतः असाधारण इति यावत् ।

(ख) प्रसूता प्रसूतवती कर्त्तरि क्तः । अभ्युपपन्ना अनुगृहीता ।

(ग) विपाकः दशाविपर्य्यासः । उपकरणीभावम् उपयोगित्वम् सहायतामिति यावत् ।

---

(१) मौलिक ।१।२।४। लौकिकः । ३ ।

(२) गते ।१।२।४। प्रतिनिवर्त्तमाने । ३ ।

(३) प्राप्तप्रसववेदना । १ । २ ।
प्राप्तप्रसववेदनम् । ३ । ४ ।

(४) तदैव तत्र । १ । २ । ४ ।
तत्रैव च । ३ ।

(५) पृथ्वीभागीरथीभ्याम् ।१।२।४।
जाह्नवीपृथिवीभ्याम् । ३ ।

(६) सुतद्वयं तस्याः । १ । ३ । ४ ।
तद्दारकद्वयं तस्याः । २ ।

(७) मुरला । १ । ३ । ४ ।
मुरला । सविस्मयम् । २ ।

(८) पावनाद्भुतः । १ । ४ ।
परमाद्भुतः । २ । ३ ।

तमसा। इदानीन्तु शम्बूक-(१) वृत्तान्तेनानेन सम्भावित-जनस्थानागमनं (२) रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी (३) यदेव भगवत्या लोपामुद्रया (४) स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता (क)।

मुरला। सुविचिन्तितं भगवत्या राजधानीस्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्य्यैर्व्यापृतस्य रामभद्रस्य नियता (५) स्थितविक्षेपाः अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटी प्रवेशो महाननर्थ इति तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात् (ख)।

तमसा। उक्तमत्र (६) भगवत्या भागीरथीदेव्या वत्से देवयजनसम्भवे सीते अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशसंवत्सरस्य (७) संख्यामङ्गलग्रन्थिरभिबध्यते (८) तदात्मनः पुराणश्वशुरम् एतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारम् अप-

(क) गृहाचारव्यपदेशेन गृहकर्म्मव्याजेन।

(ख) नियतास्थितविक्षेपाः — चित्तस्य विक्षेपा वैकल्यानि नियताः नियन्त्रिताः रुद्धप्रसरा इति यावत्। अव्यग्रस्य अनाकुलस्य कार्य्यैरव्यापृतस्येति यावत्। महान् अनर्थः महानर्थनिदानम्।

---

(१) शम्बूकवध।१।४। शम्बूक।२।३।
(२) जनस्थानगमन।१।२।४।
जनस्थानागमन।३।
(३) भागीरथी।१।४।
भगवती भागीरथी।२।३।
(४) भगवत्या लोपामुद्रया।१।३।४।
लोपामुद्रया।२।
(५) रामभद्रस्य नियताः।१।४।
नियताः।२। अनियताः।३।
(६) उक्तमद्य।१।४। उक्तमेव।२।
उक्तमत्र।३।
(७) द्वादशजन्मसंवत्सरस्य।१।२।४।
द्वादशसंवत्सरस्य।३।
(८) अभिवर्त्तते।१।२।४। अभिबध्यते।३।

हतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व न च (१) त्वामवनिपृष्ठचारिणीम् (२) अस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किं पुनर्मर्त्या इति अहमाज्ञापिता (३), तमसे त्वयि प्रकृष्टप्रेमैव वधूर्वत्सा जानकी (४) अतस्त्वमेवास्याः प्रत्यनन्तरीभवेति साऽहमधुना यथादिष्टमनुतिष्ठामि (क) ।

मुरला । अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि रामभद्रोऽप्यागत एवेति तर्कयामि ।

तमसा । तदियं गोदावरीहृदान्निष्क्रम्य

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकवरीकमाननम् ।
करुणस्य मूर्त्तिरिव वा (५) शरीरिणी
विरहव्यथेव (६) वनमेति जानकी (ख) ॥

(क) संख्यामङ्गलग्रन्थिः— संख्याबोधको मङ्गलार्थो ग्रन्थिः अतीतवर्षसमसंख्यकग्रन्थिमत् सूत्रमिति यावत् जन्मतिथौ हस्ते सूत्रमभिबध्यते तत्र सूत्रं जन्मग्रन्थिरित्युच्यते यथा तिथितत्त्वे जन्मतिथिप्रकरणे

गुड़दुग्धतिलानद्यात् जन्मग्रन्थेश्च बन्धनम् ।

पुराणश्वशुरम्— पुराणम् आदिमम् श्वशुरम् सीतायाः श्वशुरकुलस्य सवितृरश्मिभेतत्वात् तस्य पुराणश्वशुरत्वम् । अपहतपाप्मानम्— अपहतं विनाशितं पाप्म पापं येन तम् उपासकानां पापध्वंसकारिणमित्यर्थः । प्रत्यनन्तरीभव सहचारिणी भव ।

(ख) दीर्घशोकाभिभवात् परिपाण्डू पाण्डुरवर्णौ दुर्बलौ कृशौ कपोलौ

---

(१) नतु । १ । ४ । नच । २ । ३ ।
(२) अवनिपृष्ठवर्त्तिनीम् । १ । २ । ४ ।
अवनिपृष्ठचारिणीम् । ३ ।
(३) ज्ञापिता।१।२।४। आज्ञापिता ।३।
(४) जानकीति।१।२।४। जानकी । ३ ।
(५) अथवा । १ । २ । ३ । ४ ।
(६) विरहव्यथेव । १ । ३ ।
विरहव्यथैव । २ । ४ ।

मुरला । इयं हि सा

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्म्मः केतकीगर्भपत्रम् (क) ॥

इति परिक्रम्य (१) निष्क्रान्ते ।

विष्कम्भकः ।

नेपथ्ये

प्रमादः प्रमादः (२) (ख) ।

गण्डौ यस्मिन् तत् तथापि सुन्दरं मनोहरं तथा विलोला संस्कारविरहात् श्लथलम्बिनी कबरी केशपाशः यस्मिन् तत् तथोक्तम् आननं मुखं दधती धारयन्ती जानकी सीता करुणस्य शोकस्य मूर्त्तिः आकृति इव मूर्त्तिमान् शोक इवेत्यर्थः वा अथवा शरीरिणी मूर्त्तिमती विरहव्यथेव वनमेति ।

(क) शरदिजः शरत्कालभवः घर्म्मः सन्तापः केतक्याः केतकवृक्षस्य गर्भ-पत्रं पुष्पाभ्यन्तरवर्त्ति पत्रम् इव हृदयं कुसुमम् इव तत् शोषयति यः सः तथोक्तः दारुणः दुःसहः दीर्घशोकः प्रियविरहनिबन्धनो निरवधिः शोकः मुग्धं मनोहरं बन्धनात् वृन्तात् विप्रलूनं छिन्नं किसलयं नवपल्लवम् इव तत्-सदृशमित्यर्थः अस्याः सीतायाः परिपाण्डु पाण्डुरवर्णम् क्षामं क्षीणं शरीरं ग्लपयति सातिशयां ग्लानिमापादयति ।

(ख) प्रमादः अनिष्टापातः ।

---

(१) परिक्रम्य । १ । ४ । इति परिक्रम्य । २ । ३ ।

(२) प्रमादः । १ । प्रमादः प्रमादः । ३ । ४ । २ पुस्तके परित्यक्तोऽयमंशः ।

ततः प्रविशति पुष्पावचयव्यग्रा(१) सकरुणौत्सुक्य-
माकर्णयन्ती सीता (क) ।

सीता । अम्महे जाणामि पिअसही मे वासन्ती वाह-
रदि (ख) ।

पुनर्नेपथ्ये (२)

सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै
रग्रे लोलः करिकरभको यः पुरा पोषितोऽभूत् (ग) ।

सीता । किं तस्स (घ) ।

पुनर्नेपथ्ये (३)

बध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन दर्पात् (४)
उद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः (ङ) ॥

(क) पुष्पावचयव्यग्रा — पुष्पाणाम् अवचये चयने व्यग्रा व्यासक्ता पुष्पाण्यवचिन्वतीत्यर्थः । सकरुणौत्सुक्यम् — करुणः शोकः औत्सुक्यम् उत्कण्ठा ताभ्यां सह यथा तथा ।

(ख) अम्महे जानामि प्रियसखी मे वासन्ती व्याहरति ।

(ग) स्वकरकलितैः — स्वकरेण स्वहस्तेन कलितैः अवचितैः आहृतैरिति यावत् । शल्लकीपल्लवाग्रैः — शल्लकीनां तदाख्यानां गजप्रियाणां वृक्षविशेषाणां पल्लवाग्रैः अग्रपल्लवैः । अग्रे लोलः — अग्रे पुरतः लोलः लोलुपः पल्लवग्रहणार्थमिति भावः । करिकरभकः करिशावकः उष्ट्रशावके करिशावके पशुशावकमात्रे च करभशब्दः प्रयुज्यते ।

(घ) किं तस्य ।

(ङ) दर्पात् बलगर्व्वात् । उद्दामेन महाकायेन महाबलेन च । सन्निपत्य कुतोऽपि समागत्य । अभियुक्तः आक्रान्तः ।

---

(१) व्यग्रहस्ता । १ । २ । ४ । व्यग्रा ।३। (२) पुनर्नेपथ्ये ।१।२।४। पुनस्तत्रैव ।३। (३). नेपथ्ये ।१।२।४। पुनर्नेपथ्ये । ३ । (४) वेगात् । १ । २ । दर्पात् ।३।४।

सीता। ससम्भ्रमं कतिचित् पदानि दधती (१)। अज्ज-उत्त परित्ताहि परित्ताहि मम तं पुत्तअं। स्मृतिमभिनीय सवैक्लव्यम्(२)। हद्धी हद्धी ताइं एव्व चिरपरिचिदाइं अक्खराइं पञ्चवटीदंसणेण पुणो वि मं (३) मन्दभाइणिं अणुबन्धन्ति (४)। हा अज्जउत्त। इति मूर्च्छति (क)।

प्रविश्य (५)

तमसा। वत्से समाश्वसिहि समाश्वसिहि।

नेपथ्ये

विमानराज (६) अत्रैव स्थीयताम्।

सीता। आश्वस्य ससाध्वसोल्लासम् (७)। अम्महे जलभरिदमेहत्थणिदगम्भीरमंसलो कुदो णु एसो भारदी-

(क) आर्य्यपुत्र परित्रायस्व परित्रायस्व मम तं पुत्रकम्। हाधिक् हाधिक् तानि एव चिरपरिचितानि अक्षराणि पञ्चवटीदर्शनेन पुनः अपि मां मन्दभागिनीम् अनुरुध्यन्ते। हा आर्य्यपुत्र।

अक्षराणि शब्दाः। अनुरुध्यन्ते अनुसरन्ति चिरपरिचिततया सहसा मन्मुखादुच्चरन्तीत्यर्थः।

---

(१) दधती। १। ३। ४। गत्वा। २। ततः प्रविशति। ३।

(२) विचिन्त्य। १। २। ४। स्मृतिमभिनीय सवैक्लव्यम्। ३।

(३) मं। १। २। ४। पुणोवि मं। ३।

(४) अनुबध्नन्ति। १। २। ४। अनुरुन्धन्ति। ३।

(५) प्रविश्य। १। २। ४।

(६) अयि विमानराज। १। ४। विमानराज। २। ३।

(७) ससाध्वसोत्कम्पोल्लासम्। १। ४। समाश्वस्य ससाध्वसोत्कम्पोल्लासम्। २। आश्वस्य ससाध्वसोल्लासम्। ३।

णिग्घोसो(१) भरिज्जमाणकसविवरं मं वि मन्दभाइणिं भत्ति उस्सावेदि (क)।

तमसा। सस्नेहास्रम्। अयि वत्से (२)।

किमव्यक्तेऽस्मि निनदे कुतस्त्येऽपि त्वमीदृशी (३)।

स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं (४) स्थिता (ख) ॥

सीता। भअवदि किं भणासि अपरिप्फुडं त्ति मए उण सरसञ्जोएण पच्चभिजाणिदं अज्जउत्तो एव्व वाहरदि(५)(ग)।

(क) अम्महे जलभरनमेघस्तनितगम्भीरमांसलः कुतः नु एषः भारतीनिर्घोषः भ्रियमाणकर्णविवरां माम् अपि मन्दभागिनीं झटिति उत्क्रामयति।

मांसलः महान्। भारतीनिर्घोषः वाक्यध्वनिः।

(ख) स्तनयित्नोः मेघस्य निनदे इति पूर्व्वार्द्धादनुषञ्जनीयम् चकितं चञ्चलम् उत्कण्ठितम् उत्सुकञ्च यथा तथा स्थिता मयूरी इव कुतस्त्ये कुत आगतोऽयमित्यपरिज्ञातेऽपि अव्यक्ते अपरिस्फुटे कस्यायमिति निश्चेतुमशक्ये निनदे ध्वनौ विमानराज अत्रैव स्थीयतामित्येवंरूपे तं श्रुत्वेत्यर्थः किं कथम् ईदृशी असि मेघगर्ज्जनं श्रुत्वा मयूरी यथा चकिता उत्सुका च भवति त्वमपि निनदमिममाकर्ण्य तथैव संवृत्तासि।

(ग) भगवति किं भणसि अपरिस्फुटम् इति मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातम् आर्य्यपुत्रः एव व्याहरति।

---

(१) मंसलो कुदो णु एसो भारदीणिग्घोस। १।
मंसला कुदो णु एसा भारदी णिग्घोस। २।
मंसलो कुदो णु एसो भारदीणिग्घोसो। ३। ४।

(२) सस्नेहास्रम्। १। ४।
सस्नेहास्रम्। अयि वत्से। २।३।

(३) किमव्यक्तेऽपि निनदे कुतस्ते भीतिरीदृशी। १।
किमव्यक्तेऽसि निनदे कुतस्त्येऽपि त्वमीदृशी। २। ४।
किमस्यव्यक्तनिनदे कुतस्त्येऽपि त्वमीदृशी। ३।

(४) चकितोत्कण्ठिता। १। ३।
चकितोत्कण्ठितम्। २। ४।

(५) अज्जउत्तो एव्व वाहरदि।१।२।४।
अज्जउत्तेण वाहरिदं। ३।

तमसा। श्रूयते तपस्यतः शूद्रस्य (१) दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति।

सीता। दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ (क)।

नेपथ्ये

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम्।
एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि (ख)॥

सीता। दृष्ट्वा। हा कहं पहादचन्दमण्डलावण्डुरपरिक्खामदुब्बलेण आआरेण अअं सो (२) गम्भीराणुभावलेत्तपच्चभिआणिदो अज्जउत्तो एव्व ता धारेदु मं पिअसही (३) (ग)।

इति तमसामाश्लिष्य मूर्च्छति।

तमसा। धारयन्ती। वत्से समाश्वसिहि समाश्वसिहि।

नेपथ्ये

अनेन पञ्चवटीदर्शनेन

(क) दिष्ट्या अपरिहीणराजधर्म्मः खलु स राजा।

(ख) बहुनिर्झरकन्दराणि— बहवो निर्झराः जलप्रवाहाः येषु तादृशाः कन्दराः कृत्रिमविलानि येषु तानि तथोक्तानि। गोदावरीपरिसरस्य— गोदावर्य्याः मध्ये परिसरस्य अनतिदूरवर्त्तिनः।

(ग) हा कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्ब्बलेन आकारेण अयं सः गम्भीरानुभावमात्रप्रत्यभिज्ञातः आर्य्यपुत्रः एव तत् धारयतु मां प्रियसखी।

---

(१) तपस्यतः शूद्रस्य।१।२।४। तपस्यतः किल शूद्रस्य।२।

(२) अअं सोम्म।१।२।४। अअं सो।३।

(३) ता मं धारेहि।१।२। ता धारेदु मं पिअसही।३। ता मं धारेहि धारेहि।४।

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं (१) ज्वलिष्यतः ।
उत्पीड़ इव धूमस्य मोहः प्रागावृणोति माम् (क) ॥

हा प्रिये जानकि (२) ।

तमसा । स्वगतम् । इदं तदाशङ्कितं गुरुजनेनापि ।

सीता । समास्सस्सु । हा कहं एदं (ख) ।

नेपथ्ये (३)

हा देवि दण्डकारण्यवासप्रियसखि हा देवि विदेहराज पुत्रि (४) ।

इति मूर्च्छति (५) ।

सीता । हद्धी हद्धी मं मन्दभाइणिं वाहरिअ (६) आमीलन्तणेत्तणीलुप्पलो मुच्छिदो एव्व अज्जउत्तो (७) हा कहं धरणीवट्ठे णिरस्साहणीसहं विपल्हत्थो भअवदि तमसे परित्ताहि परित्ताहि जीआवेहि अज्जउत्तं (ग) ।

इति पादयोः पतति ।

(क) उत्पीड़ः राशिः ।

(ख) हा कथम् एतत् ।

(ग) हाधिक् हाधिक् मां मन्दभागिनीं व्याहृत्य आमीलन्नेत्रनीलोत्पलः मूर्च्छितः एव आर्य्यपुत्रः हा कथं धरणीपृष्ठे निरुत्साहनिःसहं विपर्य्यस्तः भगवति तमसे परित्रायस्व परित्रायस्व जीवय आर्य्यपुत्रम् ।

(१) अथोद्दामम् । १ ।
अद्योद्दामम् । २ । ३ । ४ ।

(२) हा प्रिये जानकि । २ । अयमंशः १ । ३ । ४ पुस्तकेषु न दृश्यते ।

(३) पुनर्नेपथ्ये । १ । २ । ४ । नेपथ्ये । ३ ।

(४) हा देवि विदेहराजपुत्रि । १ । ३ । ४ ।
विदेहराजपुत्रि । २ ।

(५) मूर्च्छति । १ । २ । ४ । मूर्च्छितः पतति । ३ ।

(६) उद्दिसिअ । १ । २ । ४ । वाहरिअ । ३ ।

(७) मुच्छिदो एव्व । १ । २ । ४ ।
मुच्छिदो एव्व अज्जउत्तो । ३ ।

तमसा ।

त्वमेव ननु कल्याणि सञ्जीवय जगत्पतिम् ।

प्रियस्पर्शो हि पाणिस्ते तत्रैव नियतो भवः (१) (क) ॥

सीता । जं होदु तं होदु जह भअवदी भणादि (ख) ।

इति ससम्भ्रमं निष्क्रान्ता ।

ततः प्रविशति भूमौ निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामभद्रः ।

सीता । किञ्चित् सहर्षं स्वगतम् । जाणे पुणो वि पच्चाअदं विअ जीविदं तेल्लोअणाहस्स (ग) ।

रामः । हन्त भोः किमेतत्

प्रश्च्योतनं नु हरिचन्दनपल्लवानां

निष्पीडितेन्दुकरकन्दलजो नु सेकः ।

व्याहृत्य उद्वेगेन सम्भाष्य । आमीलन्नेत्रनीलोत्पल — आमीलत् मुद्रितं नेत्रनीलोत्पलं यस्य सः तथोक्तः । निरुत्साहनि.सह विपर्य्यस्त.— निरुत्साहात् उत्कटशोकाभिभवेन उत्साहभ्रंशात् निःसहम् अवश यथा तथा विपर्य्यस्तः भूमौ निपतितः ।

(क) ते तव पाणिः करः प्रियः स्पर्शो यस्य सः तथोक्तः तव पाणिस्पर्शो रामस्य नितरां प्रीतिकर इत्यर्थः तत्र तस्मिन् तव पाणिस्पर्शे एव भवः सञ्जीवनं रामस्येति शेषः. नियतः स्थिरः तव पाणिस्पर्श एवाव्यर्थः सञ्जीवनोपायो रामस्येति भाव ।

(ख) यत् भवतु तत् भवतु यथा भगवती भणति ।

न जाने मत्पाणिस्पर्शेनार्य्यपुत्रः सञ्जीविष्यति न वेति किन्तु यतो भगवती आदिशति अत एनं पाणिना स्पृशामीत्यर्थ ।

(ग) जानामि पुनः अपि प्रत्यागतम् इव जीवितं त्रिलोकनाथस्य ।

(१) तत्रैव निरतो जनः ।१। यत्रैव निरतो जनः ।२। तत्रैव नियतो भव ।३।४।

आतप्तजीविततरोः (१) परितर्पणो मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः (२) (क)॥
स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च।
सन्तापजां सपदि यः प्रतिहत्य मूर्च्छा
मानन्दनेन जड़तां पुनरातनोति॥

सीता। ससाध्वसकरुणं (ख) किञ्चिदपसृत्य(३)। एत्तिअं एव्व दाणीं मे बहुदरं (ग)।

रामः। उपविश्य। न खलु वत्सलया सीतादेव्या अभ्युपपन्नोऽस्मि (घ)।

(क) प्रश्च्योतनं नु हरिचन्दनपल्लवानाम्— हरिचन्दनस्य तदाख्यस्य देवतरोः पल्लवानां किसलयानां प्रश्च्योतनं रसस्रावः निःसारितो रस इति यावत्। निष्पीडितेन्दुकरकन्दलजो नु सेकः— निष्पीडितात् रसनिःसारणार्थं मर्द्दितात् इन्दुकरकन्दलात् चन्द्रकिरणकलापात् जायते यः सः तथोक्तः निष्पीडितेभ्यश्चन्द्रकिरणेभ्यो निःसृतेन रसेन निष्पन्न इत्यर्थः।

(ख) ससाध्वसकरुणम् - साध्वसं भयम् करुणः शोकः ताभ्यां सह यथा तथा।

(ग) एतावत् एव इदानीं मे बहुतरम्।

(घ) अभ्युपपन्नः अनुगृहीतः आश्वासित इति यावत्।

(१) मनः। १। २। ४। तरोः। ३। ससाध्वसोत्कम्पमपसृत्य। २।
(२) प्रसिक्तः। १। २। ४। प्रविष्ट। ३। ससाध्वसंकरुणं किञ्चिदपसृत्य। ३।
(३) ससाध्वसोत्कम्पमुपसृत्य। १। ससाध्वसमुपसृत्य। ४।

सीता। हद्धी हद्धी किं त्ति मं अज्जउत्तो मग्गिस्सदि (१) (क)।

रामः। भवतु पश्यामि।

सीता। भअवदि तमसे ओसरम्ह जइ दाव मं पेक्खिस्सदि तदो अणब्भणुसादसणिधाणेण अहिअदरं (२) मम महाराओ कुविस्सदि (ख)।

तमसा। अयि वत्से भागीरथीवरप्रभावात् (३) वनदेवतानामप्यदृश्या (४) संवृत्तासि।

सीता। आं अत्थि एदं (ग)।

रामः। प्रिये जानकि (५)।

सीता। समन्युगद्गदम्। अज्जउत्त असरिसं क्खु एदं वअणं(६) इमस्स वुत्तन्तस्स। सास्रम्। अहवा किंत्ति वज्जमई जम्मन्तरे सम्भाविददुल्लहदंसणस्स (७) मं एव्व मन्दभाइणिं

(क) हाधिक् हाधिक् किमिति माम् आर्य्यपुत्त्रः मार्गिष्यति।

(ख) भगवति तमसे अपसरावः यदि तावत् मां प्रेचिष्यते तदा अनभ्यनुज्ञातसन्निधानेन अधिकतरं मम महाराजः कोपिष्यति।

(ग) आं अस्ति एतत्।

(१) किंत्ति मं अज्जउत्तो मग्गिस्सदि। १।२।४।
किंत्ति अज्जउत्तो मं मग्गिस्सदि।३।

(२) अहिअं पि।१।२।४।
अहिअदरं।३।

(३) वरप्रसादात्।१।४।
प्रसादात।२। वरप्रभावात्।३।

(४) असंदृश्या।१।२।४। अदृश्या।३।

(५) प्रिये जानकि ननु प्रिये जानकि १।२।४।
प्रिये जानकि।३।

(६) एदं।१। एदं वअणं।२।३।

(७) वज्जमई जम्मन्तरेसु वि पुणो असम्भाविददुल्लहदंसणं।१।२।४।
वज्जमई जम्मन्तरे सम्भाविददुल्लहदंसणस्स।३।

उद्दिसिअ वच्छलस्स एवंवादिणो अज्जउत्तस्स उवरि णिरणु-क्कोसा भविस्सं अहं एदस्स हिअअं आणामि मम (१) एसो त्ति (क)।

राम:। सर्व्वतो विलोक्य सनिर्व्वेदम्। हा कथमत्र न कश्चिदपि (२)।

सीता। भअवदि तमसे तहा णिक्कारणपरिच्चाइणो वि एदस्स एवंविहेण दंसणेण (३) केरिसो विअ (४) मे हिअआणु-बन्धो त्ति ण आणामि (५) (ख)।

(क) आर्य्यपुत्र असदृशं खलु एतत् वचनम् अस्य वृत्तान्तस्य। अथवा किमिति वज्रमयी जन्मान्तरे सम्भावितदुर्लभदर्शनस्य माम् एव मन्दभागिनीम् उद्दिश्य वत्सलस्य एवंवादिनः आर्य्यपुत्रस्य उपरि निरनुक्रोशा भविष्यामि अहम् एतस्य हृदयं जानामि मम एषः इति।

असदृशं खल्वेतद्वचनमस्य वृत्तान्तस्य— एतत् वचनं प्रिये जानकीति सस्नेह-सम्भाषणम् अस्य वृत्तान्तस्य वह्नौ विशुद्धाया अपि मम लोकवादश्रवणात् परित्यागरूपव्यापारस्य असदृशम् अयोग्यम् तदा निष्कारणपरित्यागिन-स्तव इदानीं प्रिये इति सम्भाषणमेकान्तमसम्बद्धमित्यर्थः। वज्रमयी— वज्रनिर्म्मिता वज्रवत् कठोरप्राणा इति यावत् अन्यथा दुःसहविरहवेदनाभि-भवेन प्राणात्ययः स्यादिति भावः।

(ख भगवति तमसे तथा निष्कारणपरित्यागिनः अपि एतस्य एवंविधेन दर्शनेन कीदृशः इव मे हृदयानुबन्धः इति न जानामि।

हृदयानुबन्धः— हृदयस्य चित्तस्य अनुबन्धः अवस्था।

(१) मम वि। १। २। ४। मम। ३। २। ४।

(२) हा न कश्चित्। १।
हा न काचिदत्र। २।
हा कथमत्र न कश्चिदपि। ३।
हा न कश्चिदत्र। ४।

(३) एदिणा एवंविधेण दंसणेण। १। एवंविधेण दंसणेण। ३।

(४) कीदिसो विअ। १। ३। ४।
कीदिसो। २।

(५) ण आणामि ण आणामि। १। २।
ण आणामि। ३। ४।

तमसा। जानामि वत्से जानामि

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं (१)
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव (क)॥

रामः। देवि

प्रसाद इव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः।
अद्याप्येवार्द्रयति (२) मां त्वं पुनः क्वासि नन्दिनि (ख)॥

सीता। एदे क्खु दे (३) अगाधदंसिदसिणेहसम्भारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा (४) जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदो (५) वि बहुमदो मे जम्मलाहो (ग)।

(क) तव हृदयं चित्तं नैराश्यात् पुनः समागमाशाविरहात् तटस्थम् उदासीनम् अपि च किञ्च विप्रियवशात् निष्कारणपरित्यागरूपस्याप्रियस्य घटनावशात् कलुषं रोषाकुलम् अस्मिन् दीर्घे वियोगे झटिति अकस्मात् घटनया सन्दर्शनेन उत्तम्भितं अवलम्बितम् इव सौजन्यात् अनुरागदर्शनात् प्रसन्नं प्रीतिमापन्नम् दयितस्य प्रियस्य करुणैः शोकव्यञ्जकैः वाक्यविन्यासैः गाढः सान्द्रीभूतः करुणः शोको यस्मिन् तत् तथोक्तम् नितरां शोकाकुलमित्यर्थः अस्मिन् क्षणे प्रेम्णा स्नेहोदयेन द्रवीभूतम् इव।

(ख) मूर्त्तः मूर्त्तिमान्। अद्याप्येवार्द्रयति— अद्यापि अस्मिन् क्षणेऽपि आर्द्रयत्येव। नन्दिनि आनन्दयित्रि।

(ग) एते खलु ते अगाधदर्शितस्नेहसम्भाराः आनन्दनिस्यन्दिनः श्रुताः

(१) अपिहु करुणैः। १। २।
दयितकरुणैः। ३। ४।
(२) अद्याप्येवार्द्रयति। १। ३। ४।
अद्याप्यानन्दयति। २।
(३) एदे क्खु दे। १। ३। ४।
एदे दे। २।
(४) उल्लावा। १।२।४। आलावा। ३।
(५) विल्लिदो। १।२। सल्लिदो। ३। ४।

रामः । अथवा कुतः प्रियतमा नूनं सङ्कल्पाभ्यासपाटवोत्पाद (१) एष रामभद्रस्य भ्रमः (क) ।

नेपथ्ये

प्रमादः प्रमादः । सीतादेव्याः स्वकरकलितैरित्यर्द्धं पठ्यते ।

रामः । सकरुणौत्सुक्यम् । किं तस्य वत्सस्य (२) ।

पुनर्नेपथ्ये

बध्वा साऽर्द्धमित्युत्तरार्द्धं पठ्यते ।

सीता । को दाणिं अहिउज्जिस्सदि (ख) ।

मया आर्य्यपुत्रस्य उल्लापाः येषां प्रत्ययेन निष्कारणपरित्यागशल्यितः अपि बहुमतः मे जन्मलाभः ।

उल्लापाः शोकपूर्णा आलापाः । येषां प्रत्ययेन— येषाम् उल्लापानां प्रत्ययेन अनुभवेन श्रवणेनेति यावत् । निष्कारणपरित्यागशल्यितः— निष्कारणपरित्यागात् शल्यितः शल्यविद्धः दुःसहक्लेशवज्ज इत्यर्थः ।

(क) सङ्कल्पाभ्यासपाटवोत्पादः— सङ्कल्पस्य चिन्तायाः अभ्यासेन पौनःपुन्येन जनितात् पाटवात् नैपुण्यात् उत्पादः उद्भवो यस्य सः तथोक्तः निरन्तरचिन्तावशेन सञ्जाततन्मयत्वात् एवं मन्ये इत्यर्थः ।

(ख) कः इदानीम् अभियोक्ष्यते ।

अभियोक्ष्यते— मत्पोषितस्य करिशावकस्य रक्षणार्थं तदाक्रामकं द्विरदपतिम् आक्रमिष्यति ।

(१) सङ्कल्पाभ्यासपाटवोत्पादितः ।१।४। (२) किं तस्य ।१।२।४
सङ्कल्पाभ्यासपाटवोपादानः ।२। किं तस्य वत्सस्य ।३।
सङ्कल्पाभ्यासपाटवोत्पादः ।३।

रामः । क्वासौ क्वासौ (१) दुरात्मा यः प्रियायाः पुत्त्रकं बधद्वितीयमभिभवति ।

इत्युत्तिष्ठति ।

प्रविश्य

सम्भ्रान्ता वासन्ती । कथं देवो रघुपतिः (२) ।

सीता । कहं पिअसही मे वासन्ती (क) ।

वासन्ती । जयति जयति देवः ।

रामः । निरूप्य । कथं देव्याः प्रियसखी वासन्ती ।

वासन्ती । देव त्वर्य्यतां त्वर्य्यताम् इतो जटायुशिखरि-दक्षिणेन(३) सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु देव्याः पुत्त्रकं देवः (४) (ख) ।

सीता । हा ताद जटाओ अज्ज सुसं (५) तए विणा जणट्ठाणं (ग) ।

रामः । अहह हृदयमर्म्मच्छिदः खल्वमी कथोद्घाताः (घ) ।

वासन्ती । इत इतो देवः ।

(क) कथं प्रियसखी मे वासन्ती ।

(ख) सम्भावयतु रक्षतु ।

(ग) हा तात जटायो अद्य शून्यं त्वया विना जनस्थानम् ।

(घ) कथोद्घाताः— कथानां पूर्व्ववृत्तान्तानाम् उद्घाताः उल्लेखाः ।

---

(१) क्वासौ क्वासौ।१।३।४। क्वासौ । २ ।

(२) रघुनन्दनः ।१।२।४। रघुपतिः। ३ ।

(३) जटायुगिरिशिखरस्य कूल-दक्षिणेन । १ । ४ ।
जटायुगिरिशिखरस्य दक्षिणेन।२।
जटायुशिखरिदक्षिणेन । ३ ।

(४) देव्याः पुत्रकं देवः । १ । २ । ४ ।
देवः पुत्रकं सीतादेव्याः । ३ ।

(५) सुस्सं । १ । २ । ४ ।
अज्ज सुसं । ३ ।

सीता । भअवदि सच्चं (१) एव्व वणदेवदा वि मं ण पेक्खदि (क) ।

तमसा । अयि वत्से सर्व्वदेवताभ्यः प्रकृष्टमैश्वर्य्यं (ख) मन्दाकिनीदेव्याः (२) तत् किमित्याशङ्कसे (३) ।

सीता । तदो अणुसरम्ह (ग) ।

इति परिक्रामतः ।

रामः । परिक्रम्य (४) । भगवति गोदावरि नमस्ते ।

वासन्ती । निरूप्य (५) । देव देव मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्त्रकेण ।

रामः । विजयतामायुष्मान् ।

सीता । अम्महे एरिसो एस सो संवुत्तो (६) (घ) ।

रामः । देवि दिष्ट्या वर्द्धसे

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णपूरात् ।

(क) भगवति सत्यम् एव वनदेवता अपि मां न प्रेक्षते ।

(ख) ऐश्वर्य्यं प्रभावः ।

(ग) ततः अनुसरावः ।

(घ) अम्महे ईदृशः एषः सः संवृत्तः ।

(१) सच्चं । १ । ३ । ४ । सच्चं । २ ।

(२) मन्दाकिनीदेव्याः । १ । ४ ।

भागीरथीदेव्याः । २ ।

मन्दाकिन्याः । ३ ।

(३) तत् किमाशङ्कसे । १ । २ ।

तत् किमित्याशङ्कसे । ३ । ४ ।

(४) रामः । १ । ३ । ४ ।

रामः । परिक्रम्य । २ ।

(५) वासन्ती । १ । ३ । ४ ।

वासन्ती । निरूप्य । २ ।

(६) एस संवुत्तो । १ । २ । ४ ।

एसो सो संवुत्तो । ३ ।

सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यं कल्याणं वयसि तरुणे भाजनं तस्य जातः (क)॥

सीता। अविउत्तो दाणीं अअं दीहाउ इमाए सोम्म दंसणाए समं (१) होदु (ख)।

रामः। सखि वासन्ति पश्य पश्य कान्तानुवृत्तिचातुर्य्यमपि शिक्षितं (२) वत्सेन (ग)

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः(३)
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् (४) (घ)॥

(क) उद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण— (उद्गच्छत् आविर्भवत् अचिरप्ररूढमिति यावत् बिसकिसलयं मृणालपल्लवं तद्वत् स्निग्धः कोमलः दन्ताङ्कुरः अनतिप्रौढो दन्तो यस्य तेन तथोक्तेन)

(ख) अवियुक्तः इदानीम् अयं दीर्घायुः अनया सौम्यदर्शनया समं भवतु।

(ग) कान्तानुवृत्तिचातुर्य्यम्— कान्तायाः प्रियायाः अनुवृत्तौ अनुरञ्जने चातुर्य्यं कौशलम्।

(घ) यत् यतः स्नेहात् प्रणयातिरेकात् लीलया क्रीड़या अक्लेशेन वा उत्खातानाम् उत्पाटितानां मृणालकाण्डानां बिसकदम्बानां कवलच्छेदेषु ग्रासांशेषु दत्तेष्विति शेषः पुष्यद्भिः विकसद्भिः पुष्करैः पद्मैः वासितस्य सुरभितस्य पयसः जलस्य गण्डूषाणां मुखपूरणपरिमितानाम् अंशानां संक्रान्तयः सञ्चाराः सम्पादिताः कृताः शीकरिणा शीकरवता जलकणस्राविणेति यावत्

(१) सोम्मदंसणाए समं। १। ३। ४। सोम्मदंसणाए। २।
(२) अनुशिक्षितम्। १। २। ४। शिक्षितम्। ३।
(३) सम्पातिताः। १। २। सम्पादिताः। ३। ४।
(४) कृतम्। १। धृतम्। २। ३। ४।

सीता । भअवदि तमसे अअं दाव एरिसो जादो (१) दे उण ण आणामि कुसलवा एत्तिकेण कालेण केरिसा विअ होन्ति (क) ।

तमसा । यादृशोऽयं तादृशौ तावपि ।

सीता । एरिसी अहं मन्दभाइणी जाए ण केवलं णिरन्तरं अज्जउत्तविरहो पुत्तविरहो वि (ख) ।

तमसा । भवितव्यतेयमीदृशी ।

सीता । किं वा मए पसूदाए, जेण तारिसाणं (२) मम पुत्तकाणं ईसिविरलकोमलधवलदसणुज्जलकवोलं अणुबद्धमुद्धकाअलिविहसिदं णिबद्धकाअसिहण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिदं अज्जउत्तेण (ग) ।

करेण शुण्डेन कामं पर्य्याप्तं सेकः सेचनं विहितः सम्पादितः विरामे पुनः सेकावसाने तु अनरालम् अवक्रं नालं मृणालदण्डो यस्य तादृशं यत् नलिनीपत्रं पद्मपत्रं तद्रूपम् आतपत्रं धृतं करिण्या आतपवारणार्थमित्यर्थः ।

(क) भगवति तमसे अयं तावत् ईदृशः जातः तौ पुत्रः न जाने कुशलवौ एतावता कालेन कीदृशौ इव भवतः ।

(ख) ईदृशी अहं मन्दभागिनी यस्याः न केवलम् निरन्तरम् आर्य्यपुत्रविरहः पुत्रविरहः अपि ।

(ग) किं वा मया प्रसूतया येन तादृशयोः मम पुत्रयोः ईषद्विरलकोमलधवलदशनोज्ज्वलकपोलम् अनुबद्धमुग्धकाकलीविहसितं निबद्धकाकपक्षखण्डकम् अमलमुखपुण्डरीकयुगलं न परिचुम्बितम् आर्य्यपुत्रेण ।

ईषद्विरलकोमलधवलदशनोज्ज्वलकपोलम्— (ईषद्विरलानि अनतिनिविड़ानि कोमलानि धवलानि दशनानि यस्मिन् तत् उज्ज्वलौ कान्तिपूर्णौ कपोलौ यस्मिन् तत् ईषद्विरलकोमलधवलदशनञ्च तत् उज्ज्वलकपोलञ्च तत्

(१) ईदिसो।१।४। ईदिसो जादो।२।३। (२) तादिसंपि।१।२।४। तादिसाणं।३।

तमसा। अस्तु देवताप्रसादात् (क)।

सीता। भअवदि तमसे एदिणा अवच्चसंसुमरणेण उस्सु सिदपण्हुदत्थणी ताणं च पिदुणो सण्णिधाणेण खणमेत्तं संसारिणी म्हि संवुत्ता (ख)।

तमसा। किमत्रोच्यते प्रसवः खलु प्रकर्षपर्य्यन्तः स्नेहस्य परमं चेतदन्योन्यसंश्लेषणं पित्रोः (ग)

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते (घ)॥

तथोक्तम्। अनुबद्धमुग्धकाकलीविहसितम्—काकली मृदुमधुरध्वनिः विहसितं हास्यम् अनुबद्धे निरन्तरलग्ने मुग्धे मनोहारिणी काकलीविहसिते यस्मिन तत् तथोक्तम्। निबद्धकाकशिखण्डकम् - निबद्धाः धृताः काकशिखण्डकाः काकपक्षा येन तत् तथोक्तम्।

(क) अस्तु देवताप्रसादात् - देवतानां प्रसादात् अनुग्रहात् अस्तु रामचन्द्रेण तव पुत्रयोर्मुखचुम्बनं सम्पद्यताम् सपुत्रा भवती तेन परिग्टहीता मित्यर्थः।

(ख) भगवति तमसे एतेन अपत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी तयोः च पितुः सन्निधानेन क्षणमात्रम् संसारिणी अस्मि संवृत्ता।

उच्छ्वसितप्रस्नुतस्तनी - उच्छ्वसितौ ईषदुत्कम्पितौ प्रस्नुतौ क्षीरस्राविणौ स्तनौ यस्याः सा।

(ग) प्रसवः अपत्यम्। प्रकर्षपर्य्यन्तः प्रकर्षस्य आतिशय्यस्य पर्य्यन्तः परा काष्ठा। अन्योन्यसंश्लेषणम्— अन्योन्यस्य परस्परस्य संश्लेषणं संयोजनं चित्तबन्धनमिति यावत्।

(घ) स्नेहसंश्रयात् स्नेहसम्बन्धात् उभयोरेव स्नेहस्य समाधारणात्वदत्वादित्यर्थः, दम्पत्योः स्त्रीपुंसयोः, अन्तःकरणतत्त्वस्य चित्तपदार्थस्य अपत्यमिति अपत्यरूपः अयम् एकः आनन्दग्रन्थिः आनन्दमयं बन्धनं बध्यते।

वासन्ती । इतोऽपि देवः पश्यतु

अतरुणमदताण्डवोत्सवान्ते
स्वयमचिरोद्गतमुग्धलोलबर्हः (१) ।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष बधूसखः शिखण्डी (क) ॥

सीता । सकौतुकास्रम् । एसो सो (२) (ख) ।

रामः । मोदस्व वत्स मोदस्व (३) ।

सीता । एव्वं होदु (ग) ।

रामः । भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः
प्रचलितचतुरभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानम्
सुतमिव मनसा त्वां वत्सलेन स्मरामि (घ) ॥

(क) अचिरोद्गतः नवप्ररूढः मुग्धः मनोहरः लोलः चञ्चलः बर्हः पिच्छः यस्य सः तथोक्तः अतएव उच्छिखः उन्नतशिखः मणिमयः मुकुट इव प्रतीयमानः बधूसखः बध्वाः स्वप्रियायाः सखा सहचरः तत्सहित इत्यर्थः सः एषः यः प्रियया पूर्व्वं पोषित आसीदित्यर्थः शिखण्डी मयूरः अतरुणेन प्रौढेन महतेति यावत् मदेन हर्षेण हेतुना यः ताण्डवोत्सवः नृत्यरूप उत्सवः तस्य अन्ते अवसाने कदम्बे कदम्बतरौ स्वयं स्वच्छन्दं नदति शब्दायते ।

(ख) एषः सः ।

(ग) एवं भवतु ।

(घ) भ्रमिषु सञ्चरणेषु कृता पुटस्य आवरणस्य अन्तः अभ्यन्तरे मण्डलावृत्तिः मण्डलावर्त्तनं येन तत् तादृशं चक्षुः प्रचलितयोः चलन्त्योः चतुरयोः

(१) स्वयम् । १ । २ । ४ । स्वयम् । ३ ।
(२) एसो सो एसो सो । १ । २ ।
'एसो सो । ३ । ४ ।
(३) वत्स मोदस्व । १ । ४ । वत्स मोदस्व
वयमद्य वर्त्तामहे । २ ।
मोदस्व वत्स मोदस्व । ३ ।

हन्त तिर्य्यञ्चोऽपि परिचयमनुरुध्यन्ते (१) (क) ।

कतिपयकुसुमोद्गमः कदम्बः

प्रियतमया परिवर्द्धितो(२) य आसीत् ।

सीता । निरूप्य सास्रम् । सुष्ठु पच्चभिज्ञाणिदं अज्ज-उत्तेण (ख) ।

रामः । स्मरति गिरिमयूर एष देव्याः

स्वजन इवात यतः प्रमोदमेति (ग) ॥

वासन्ती । अत्र तावदासनपरिग्रहं करोतु देवः

एतत्तदेव कदलीवनमध्यवर्त्ति

कान्तासखस्य शयनीयशिलातलं ते ।

अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः

सीता ततो हरिणकैर्न विमुच्यते स्म (घ) ॥

रामः । इदं तावदशक्यमेव द्रष्टुम् ।

इत्यन्यतो रुदन्नुपविशति ।

सविलासयोः भ्रुवोः ताण्डवैः नृत्यैः सञ्चारैरिति यावत् मण्डयन्त्या अलङ्कुर्वत्या मुग्धया सीतया करकिसलयेन करपल्लवेन अनुष्ठितैः तालैः कालक्रियामानैः नर्त्त्यमानं त्वां सुतमिव वत्सलेन स्नेहपूर्णेन मनसा स्मरामि ।

(क) अनुरुध्यन्ते अनुसरन्ति स्मरन्तीति यावत् ।

(ख) सुष्ठु प्रत्यभिज्ञातम् आर्य्यपुत्रेण ।

(ग) स्मरति— तं प्रियया परिवर्द्धितं कदम्बतरुमिति शेषः । स्वजन इवात—स्वजने सुहृदि इव अत्र अस्मिन् कदम्बतरौ ।

(घ) न विमुच्यते स्म— न विमुच्यते परित्यज्यते शयनीयशिलातलमिति शेषः । स्म इति पादपूरणे ।

(१) परिचयम् । १ । २ । ४ । सौजन्यम् । ३ ।

(२) परिवर्द्धितः । १ । २ । ४ । मम वर्द्धितः । ३ ।

सीता । सहि वासन्ति किं तए कअं अज्जउत्तस्स मम अ एदं दंसअन्तीए । हद्धी हद्धी सो एव्व अज्जउत्तो तं एव्व पञ्चवटीवणं सा एव्व पिअसही वासन्ती (१) ते एव्व विविह-वीसम्भसाक्खिणो गोदावरीकाणणुद्देसा ते एव्व जादणिव्विसेसा मअपक्खिपादवा (२) मम उण मन्दभाइणीए दीसमाणं वि सव्वं एव्व एदं णत्थि त्ति ता एरिसो जीअलोअस्स परिवत्तो (क) ।

वासन्ती । सखि सीते कथं न पश्यसि रामस्यावस्थाम्

कुवलयदलस्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवं नवमेव (३) यः ।
विकलकरणः (४) पाण्डुः सोऽयं (५) शुचा परिदुर्ब्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशां (६) प्रियः (ख) ॥

(क) सखि वासन्ति किं त्वया कृतम् आर्य्यपुत्रस्य मम च एतत् दर्शयन्त्या । हाधिक् हाधिक् सः एव आर्य्यपुत्रः तत् एव पञ्चवटीवनम् सा एव प्रियसखी वासन्ती ते एव विविधविस्रम्भसाक्षिणः गोदावरीकाननोद्देशाः ते एव जात-निर्विशेषाः मृगपक्षिपादपाः मम पुनः मन्दभागिन्याः दृश्यमानम् अपि सर्व्वम् एतत् नास्ति इति तत् ईदृशः जीवलोकस्य परिवर्त्तः ।

जातनिर्विशेषाः अपत्यनिर्विशेषाः ।

(ख) सततम् अविरतं स्वेच्छया यदृच्छया इच्छामात्रेणेति यावत्, दृश्यः द्रष्टुं शक्यः अपि यः रामः कुवलयं नीलोत्पलं तस्य दलानि पर्णानि तद्वत्

(१) वासन्ती । १ । २ । ४ ।
पिअसही वासन्ती । ३ ।
(२) इतः परं १।२।४ पुस्तकेषु । सा एव्व चाहं । इत्ययमंशो दृश्यते ।
(३) नवो नव एव । १ । २ । ४ ।
नवं नवमेव । ३ ।
(४) विकलकरणः । १ । २ । ४ ।
करणविकलः । ३ ।
(५) पाण्डुः सोऽयम् । १ । ३ । ४ ।
पाण्डुच्छायः । २ ।
(६) दृशोः । १ । २ । दृशाम् ।३।४।

सीता। पेक्खामि सहि पेक्खामि। (क)

तमसा। पश्यन्ती प्रियं भूयाः (१) (ख)।

सीता। हा देव्व एसो मए विणा अहं (२) एदेण विणा त्ति केण सम्भाविदं आसि ता मुहुत्तअं वि जम्मन्तरादो विअ लद्धदंसणं (३) वाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तं (ग)।

इति सतृष्णं पश्यति (४)।

स्निग्धैः चिक्कणैः अङ्गैः अवयवैः नवं नवम् अननुभूतपूर्व्वम् एव नयनयोः तव लोचनयोः उत्सवम् आनन्दं ददौ शुचा तद्वियोगजनितेन शोकेन विकलकरणः विकलेन्द्रियः पाण्डुः पाण्डुरवर्णः परिदुर्ब्बलः नितरां कृशः सः तादृशः अयं पुरोवर्त्ती स इति स एवायमिति कथमपि कथञ्चित् उन्नेतव्यः अनुमेयः तथापि दृशां चक्षुषां प्रियः प्रीतिकरः।

(क) प्रेक्षे सखि प्रेक्षे।

(ख) प्रियं रामं पश्यन्ती प्रेक्षमाणा भूयाः भव अविच्छेदेन प्रियं पश्येत्यर्थः पुनरनेन तव समागमो भवत्विति भावः।

(ग) हा दैव एषः मया विना अहम् एतेन विना इति केन सम्भावितम् आसीत् तत् मुहूर्त्तकम् अपि जन्मान्तरतः इव लब्धदर्शनं वाष्पसलिलान्तरेषु प्रेक्षे तावत् वत्सलम् आर्य्यपुत्त्रम्।

जन्मान्तरत इव अन्यस्मिन् जन्मनीव सप्तम्यास्तसिल्। वाष्पसलिलान्तरेषु - वाष्पसलिलानाम् अश्रुजलानाम् अन्तरेषु परिपतनपुनरुद्गमयोर्मध्यवर्त्तिषु अवकाशेषु।

---

(१) सखि पश्यन्ती। १। ४।
पुलि पश्यन्ती। २। पश्यन्ती। ३।

(२) अहं वि। १। २। ४।
अहं। ३।

(३) अनुलद्धदंसणा। १। २। ४।
लद्धदंसणं। ३।

(४) पश्यति। १। २। ४।
पश्यन्ती मूर्च्छति। ३।

तमसा । सस्नेहास्रं परिष्वज्य ।

विलुलितमतिपूरैर्वाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिस्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः (क) ॥

वासन्ती ।

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं (१) रज्युत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः (ख) ॥

रामः । एहि सखि वासन्ति नन्वितः (२) स्थीयताम् (ग) ।

(क) आनन्दशोकप्रभवं प्रियदर्शननिमित्तात् आनन्दात् प्रियविरहनिबन्धनाच्च शोकात् उद्भूतम् अतिपूरैः प्रबलाभिर्धाराभिः विलुलितं विगलितं वाष्पम् अश्रुजलम् अवसृजन्ती वर्षन्ती तृष्णया अतिमहता दर्शनौत्सुक्येन हेतुना उत्तानदीर्घा उत्ताना विस्फारिता च दीर्घा प्रियानुसरणात् दीर्घवत् प्रतीयमाना च स्नेहनिस्यन्दिनी स्नेहस्रविणी धवलबहलमुग्धा अञ्जनराहित्यात् धवला च बहलं सातिशयं मुग्धा मनोहारिणी च अतएव दुग्धकुल्येव दुग्धसरिदिव लक्ष्यमाणा ते तव दृष्टिः हृदयेशं जीवितेश्वरं स्नपयति आर्द्रीकरोति ।

(ख) मधुश्च्युतः— मधु मकरन्दं श्च्योतन्ति वर्षन्ति ते तथोक्ताः । स्फुटितकमलामोदप्रायाः— स्फुटितानां विकसितानां कमलानां पद्मानाम् आमोदस्य अतिमनोहरस्य गन्धस्य प्रायो बाहुल्यं येषु ते तथोक्ताः । रज्युत्कण्ठाः— रत्या रामागमनसम्भूतेन प्रीतिभरेण उत्कण्ठाः उन्नमितग्रीवाः ।

(ग) स्थीयताम् उपविश्यताम् ।

(१) अविरलम् । १ । २ । ४ ।
अविकलम् । ३ ।

(२) नन्वितः । १ । २ । ४ ।
नन्विह । ३ ।

वासन्ती । उपविश्य सास्रम् । महाराज अपि कुशलं कुमारलक्ष्मणस्य ।

रामः । अश्रुतिमभिनीय

करकमलवितीर्णै (१) रम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः (क) ॥

वासन्ती । महाराज ननु पृच्छामि अपि कुशलं कुमारलक्ष्मणस्य ।

रामः । स्वगतम् । अये महाराजेति निष्प्रणयमामन्त्रणपदं सौमित्रिमात्रे च वाष्पस्खलिताक्षरः(ख)कुशलप्रश्नः(२) तथा मन्ये विदितसीतावृत्तान्तेयमिति । प्रकाशम् । आं (३) कुशलं कुमारस्य ।

इति रोदिति ।

वासन्ती । अयि देव किमिति दारुणः (४) खल्वसि ।

सीता । सहि वासन्ति किं तुमं सि एव्वंवादिणी

(क) प्रस्तरोद्भेदयोग्यः पाषाणद्रवकल्पः हृदयस्य द्रव इव विकारः वैकल्यं भवति प्रवर्त्तते ।

(ख) वाष्पस्खलिताक्षरः— वाष्पेण अश्रुभरेणोपकण्ठकम्पतया स्खलितानि विशीर्णानि अविस्पष्टोच्चारितानीति यावत् अक्षराणि यस्मिन् सः तथोक्तः ।

(१) वितीर्णैः ।१।२।४। विकीर्णैः ।३। (२) कुशलानुप्रश्नः ।१।४। कुशलप्रश्नः ।२।३।

(३) आ ।१।२। आं ।३।४। (४) दारुणो दारुणः ।१।२।३। दारुणः ।२।

पिआरुहो क्खु सव्वस्स अज्जउत्तो विसेसदो मम पिअ-
सहीए (१) (क) ।

वासन्ती ।

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण (ख) ॥

इति मूर्च्छति ।

रामः । स्थाने खलु वाक्यनिवृत्तिर्मोहश्च । सखि समा-
श्वसिहि समाश्वसिहि (ग) ।

वासन्ती । समाश्वस्य । तत् किमिदमकार्य्यमनुष्ठितं देवेन ।

सीता । सहि वासन्ति विरम विरम (घ) ।

(क) सखि वासन्ति किं त्वम् अपि एवंवादिनी प्रियार्हः खलु सर्व्वस्य आर्य्य-
पुत्रः विशेषतः मम प्रियसख्याः ।

एवंवादिनी दारुणोऽसीत्येवमप्रियवादिनी । प्रियार्हः प्रियं प्रियसम्भा-
षणम् अर्हति इति तथोक्तः । मम प्रियसख्याः भवत्याः वासन्त्याः ।

(ख) इत्यादिभिः ईदृशैः प्रियशतैः बहुविधैः चाटुवादैः अनुरुध्य प्रीणि-
यित्वा मुग्धां सरलहृदयां तामेव अरण्ये त्यक्तवानसीति वाक्यशेषः शान्तमिति
पदप्रयोगश्च तत्परिहारव्यञ्जकः अथवा इह अस्मिन्नवसरे उत्तरेण अरण्ये
त्यक्तवानसीति वाक्यशेषनिर्द्देशेन किम् इदानीं तन्निर्द्देशः सर्व्वथा निष्प्रयोजन
एवेति भावः ।

(ग) वाक्यनिवृत्तिः अरण्ये त्यक्तवानसीति वाक्यशेषस्यानिर्द्देशः । स्थाने
युज्यते ।

(घ) सखि वासन्ति विरम विरम ।

(१) पिअसहीए । १ । ३ । ४ । पिअसहीयां । २ ।

रामः। लोको न स्पृश्यतीति (१) (क)।

वासन्ती। तत् कस्य हेतोः।

रामः। स एव जानाति किमपि (२) (ख)।

तमसा। उचितस्तदुपालम्भः (३) (ग)।

वासन्ती।

अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतः परम्।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं वत मन्यसे॥

सीता। तुमं एव्व सहि वासन्ति दारुणा कठोरा अ जा एव्वं अज्जउत्तं पलित्तं पदीवेसि (४) (घ)।

(क) लोको न स्पृश्यति — लोकः पौरो जनः न स्पृश्यति न सहते सीतायाः स्वगृहावस्थानं न तेषामभिमतमित्यर्थः।

(ख) विचारमार्गप्रहितेन चक्षुषा पौराणां तादृशव्यवहारस्य न कोऽपि हेतुर्लक्ष्यते इत्यर्थ। ते यदृच्छाचारदूषिता इति भाव।

(ग) तस्य लोकस्य उपालम्भः भर्त्सनम् उचितः न्याय्यः यदृच्छाचारदूषिततया पौराः सर्व्वथा उपालम्भमर्हन्तीत्यर्थः।

(घ) त्वम् एव सखि वासन्ति दारुणा कठोरा च या एवम् आर्य्यपुत्रं प्रदीप्तं प्रदीपयसि।

प्रदीप्तं शोकसन्तप्तम्। प्रदीपयसि सन्तापयसि।

(१) स्पृश्यतीति।१।२।४। विस्मयतीति।३। अथ चिरादुपालम्भः।३।

(२) जानाति किमपि।१।२।४। किमपि जानाति।३।

(३) चिरादुपालम्भः।१।४। उचितस्तदुपालम्भः।२।

(४) एव्वं पलीवेसि।१। एव्वं विलपन्ती पदीवेसि।२। एव्वं अज्जउत्तं पलित्तं पदीवेसि।३। एव्वं पलित्तं पलीवेसि।४।

तमसा । प्रणय एवं (१) व्याहरति शोकश्च (क) ।

राम: । सखि किमत्र मन्तव्यम्

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-

स्तस्याः परिस्फुरितगर्भभरालसायाः ।

ज्योत्स्नामयीव (२) मृदुमुग्ध (३) मृणालकल्पा

क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता (४) (ख) ॥

सीता । अज्जउत्त एसा धरामि (५) (ग) ।

रामः । हा (६) प्रिये जानकि क्वासि ।

सीता । हद्धी हद्धी अज्जउत्तो वि पमुक्ककण्ठं रुण्णो (७) (घ) ।

(क) प्रणयः रामे अनुरागः शोकः सीताविवासननिबन्धनः । यत् वासन्ती अयि कठोरेत्यादिना राममुपालब्धवती तद्रामेऽनुरागस्य तद्विवासनहेतुक-शोकस्य च कार्य्यं शोकाभिभूतया तया निरतिशयप्रणयवशादेव रघुपतिरित्य-मुपालब्ध इति भावः ।

(ख) त्रस्तस्य भयार्त्तस्य एकहायनस्य एकवर्षीयस्य कुरङ्गस्येव विलोला चञ्चला दृष्टिर्यस्याः सा तथोक्तायाः चाञ्चल्यातिशयद्योतनार्थं त्रस्तेति एकहायनेति च कुरङ्गस्य विशेषणद्वयम् परिस्फुरितस्य भयाभिभूततया कम्पितस्य गर्भस्य भरेण भारेण अलसायाः मन्थरायाः तस्याः सीतायाः ज्योत्स्नामयीव ज्योत्स्ना निर्म्मितेव मृदु कोमलं मुग्धं मनोहरं यत् मृणाल तत्कल्पा तत्सदृशी अङ्ग-लतिका तस्या देहलता नियतं निश्चितं क्रव्याद्भिः श्वापदैः विलुप्ता भक्षिता ।

(ग) आर्य्यपुत्र एषा ध्रिये ।

ध्रिये जीवामि ।

(घ) हा धिक् हा धिक् आर्य्यपुत्रः अपि प्रमुक्तकण्ठं रुदितः ।

(१) प्रणय एवायम् । १ । ४ ।
प्रणय एवेदम् । २ । प्रणय एवम् । ३ ।

(२) ज्योत्स्नामयी च । १ । २ ।
ज्योत्स्नामयीव । ३ । ४ ।

(३) मुग्ध । १ । ३ । ४ । बाल । २ ।

(४) प्रलुप्ता । १ । विलुप्ता । २ । ३ । ४ ।

(५) धरामि एसा धरामि । १ । २ । ४ ।
एसा धरामि । ३ ।

(६) हा । १ । २ । ४ । अयि । ३ ।

(७) पमुक्ककण्ठं रुण्णो । १ । ४ ।
पमुक्ककण्ठं रोदादि । २ ।
अज्ज पमुक्ककण्ठं पम्हुण्णो । ३ ।

तमसा । वत्से साम्प्रतिकमेवैतत् कर्त्तव्यानि दुःखितैर्दुःख-निर्व्वापणानि (क) । यतः (१)

पूरोत्पीडे (२) तडागस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते (ख) ॥

विशेषतो रामभद्रस्य बहुतरप्रकारकष्टो जीवलोकः (ग)

दृढं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्म्मः क्लमयति ।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम्(३) (घ) ॥

(क) साम्प्रतिकम् युक्तम् । निर्व्वापणम् उपशमनम् ।

(ख) तडागस्य जलाशयस्य पूरोत्पीडे जलवृद्धिरूपे उपद्रवे सति परीवाहः जलनिर्गमः प्रतिक्रिया जलवृद्धिनिबन्धनसेतुभङ्गादिदोषप्रशमनोपायः तद्वत् शोकक्षोभे शोकाभिभवे सति हृदयं चित्तं प्रलापैः विलापैः एव धार्य्यते स्थिरीक्रियते विलाप एव शोकाभिभूतस्य चित्तस्यासाधारणो विनोदनोपाय इति भावः ।

(ग) बहुतरप्रकारकष्टो जीवलोकः— जीवलोकः संसारः बहुतरप्रकाराणि अनेकविधानि कष्टानि यस्मिन् स तथोक्तः ।

(घ) अभियुक्तेन अवहितेन मनसा चित्तेन दृढं विश्वं जगत् विधिवत् यथाविधि पाल्यं रक्षणीयम् राज्ञां प्रजापालनस्य परमधर्म्मत्वात् प्रियायाः सीतायाः शोकः जीवं जीवनं घर्म्मः निदाघः कुसुमं पुष्पम् इव क्लमयति ग्लानिमापादयति शोकग्लपितजीवनेन विधिवत् विश्वपालनं दुर्घटमिति

(१) साम्प्रतिकमेवैतत् कर्त्तव्यानि दुःखितैःदुःखनिर्व्वापणानि यतः । १ । २ । ४ ।
साम्प्रतं युक्तान्येवैतानि कर्त्तव्यानि यतो रोदनान्येव दुःखितस्य दुःखनिर्व्वापणानि भवन्ति । ३ ।

(२) पूरोत्पीडे । १ । २ । ४ ।
जलोत्पीडे । ३ ।

(३) लाभो विरुदितम् । १ । २ ।
लाभो हि रुदितम् । ३ । ४ ।

रामः। कष्टं भोः कष्टम्

दलति (क) हृदयं गाढोद्वेगं(१) द्विधा तु न भिद्यते (२)
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्म्मच्छेदी न कृन्तति जीवितम्॥

सीता। एव्वमेदं (ख)।

रामः। हे भवन्तः पौरजानपदाः

न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता नचाप्यनुशोचिता (३)।
चिरपरिचितास्ते ते भावाः परिभ्रमयन्ति (४) माम्
इदमशरणैरद्याप्येवं (५) प्रसीदत रुद्यते (ग)॥

भावः स्वयं त्यागं कृत्वा प्रियां परित्यज्य विलपनेन रोदनेन विनोदः शोकापनयनम् असुलभः दुर्लभः मृतादिप्रियजनशोको विलापेनापनीयते स्वयंकृतपरित्यागायाः सीतायाः शोकस्तु विलपनेनापनेतुमशक्य इत्यर्थः तत् तथापि विनोदालाभेऽपि रुदितं विलपनं लाभो हि लाभ एव ननु यतः अद्यापि उच्छ्वासः जीवितधारणं भवति शोकापनोदनाच्च मत्तोऽपि जीवितधारणैकहेतुत्वात् विलप ' न केवलं न निष्फलं किन्तु महोपकारकमपीति भावः।

(क) दलति निष्पिष्टं भवति।

(ख) एवमेतत्।

(ग) चिरपरिचिताः दीर्घकालमनुभूताः ते ते भावाः पञ्चवटीप्रभृतयः पदार्थाः मां परिभ्रमयन्ति विचेतनीकुर्व्वन्ति सीतासहवासविस्रम्भसाक्षिणां तत्तत्प्रदेशानामवलोकनेन अन्तर्लीनस्य शोकानलस्य पुनरुद्दीपितत्वादिति भावः।

(१) गाढोद्वेगः।१।२। गाढोद्वेगम्।३।४।
(२) द्विधा तु न भिद्यते।१।४।
द्विधा मतु भिद्यते।२।३।
(३) नवाप्यनुशोचिता।१।२।४।
नचाप्यनुशोचिता।३।
(४) परिद्रवयन्ति।१।२।३।४।
(५) इदमशरणैरद्याप्येवम्।१।२।४।
किमिह शरणं नाद्याप्येवम्।३।

तमसा। अतिगम्भीरमवगूरणं (१) शोकसागरस्य (क)।

वासन्ती। अतिक्रान्ते धैर्य्यमवलम्ब्यतां देवेन (२)।

रामः। सखि किमत्रोच्यते (३) धैर्य्यमिति (ख)

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।

लुप्तं सीतेति (४) नामापि न च रामो न जीवति (ग)॥

सीता। मोहिद म्हि एदेहिं अज्जउत्तवअणेहिं (५) (घ)।

इदमित्यव्ययम् अतइत्यर्थकम् इदम् अस्मात् हेतोः प्रियाशोकविकलचित्ततया दित्यर्थः अशरणैः निरवलम्बैः सर्व्वथा निराश्रयैरिति यावत् अस्माभिरिति शेषः एवम् इत्थं रुद्यते विलप्यते अद्यापि प्रसीदत भवन्तु प्रसन्नेषु सीतां रह प्रत्यानीय शोकोऽपनुद्यत इति भावः।

(क) अवगूरणम् आवर्त्तः।

(ख) अत्र अस्मिन् सीतावियोगरूपे विषये धैर्य्यमिति धैर्य्यमवलम्ब्यतामिति किम् उच्यते उपदिश्यते मया धैर्य्यावलम्बनस्य परा काष्ठा प्रदर्शिता इत्यर्थः।

(ग) देव्या सीतया शून्यस्य विरहितस्य जगतः द्वादशः परिवत्सरः संवत्सरः परिवर्त्तते इति शेषः सीता इति नामापि लुप्तं विनष्टं दीर्घकालवशेन स्मृतिपथवहिर्भूततया अधुना केनापि सीतेति नाम नोदीर्य्यते इति भावः तथापि रामो न जीवति नच जीवत्येव ईदृश्यामवस्थायां जीवनं धैर्य्यावलम्बनस्य परा काष्ठेति भावः।

(घ) मोहिता अस्मि एतैः आर्य्यपुत्रवचनैः।

(१) अवगूरणम्। १। ३। ४।
आपूरणम्। २।

(२) देव अतिक्रान्ते धैर्य्यमवलम्ब्यताम्। १। २। ४।
अतिक्रान्ते धैर्य्यमवलम्ब्यतां देवेन। ३।

(३) किमत्रोच्यते। १। ३। ४।
किमुच्यते। २।

(४) प्रनष्टमिव। १। २। लुप्तं सीतेति। ३।
नच सीतेति। ४।

(५) मोहिद म्हि अज्जउत्तस्स एदेहिं वअणेहिं। १।
मोहिद म्हि अज्जउत्तस्स एदेहिं वअणेहिं। २। ४।
मोहिद म्हि एदेहिं अज्जउत्तवअणेहिं। ३।

तमसा । एवं वत्से (क)

नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः ।
एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि (ख) ॥

रामः । अयि वासन्ति मया खलु (१)

यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः ।
तथैव तीव्रो हृदि शोकशङ्कु-
र्मर्म्माणि कृन्तन्नपि किं न सोढः (ग) ॥

सीता । एव्वं म्हि मन्दभाइणी पुणो वि आआसआरिणी अज्जउत्तस्स (घ) ।

(क) एवं वत्से— वत्से एवम् मोहितास्मीति यद्वदसि तत्तथा ।

(ख) स्नेहार्द्राः स्नेहपूर्णाः शोकदारुणाः शोकेन हेतुना दारुणा दुःसहाः एताः वाचः रामोक्तयः न प्रियतमाः न एकान्ततो मनोहारिण्यः एताः ताः सविषाः विषमिश्राः मधुनो धाराः त्वयि श्च्योतन्ति प्रवर्त्तन्ते रामोक्तीनां स्नेहार्द्रतया मधुधाराधर्म्मित्वम् शोकदारुणतया विषसंसृष्टत्वम् उभयधर्म्माक्रान्ततया नैकान्तमनोहारित्वम् विषसंसृष्टतया मोहजनकत्वम् ।

(ग) यथा अन्तः हृदये प्रत्युप्तं निहितं तिरश्चीनं वक्रभावापन्नम् तथाविधस्यैव समाधिकक्लेशकरत्वात् सहसा निःसारयितुमशक्यत्वाच्च अलातशल्यं ज्वलदङ्गारनिर्म्मितं शल्यं क्लिश्नातीति शेषः चकारो वार्थे यथा वा सविषः विषाक्तः दंशः दन्तः क्लिश्नाति तथैव तद्वदेव तीव्रो दुःसहः हृदि हृदये अवस्थित इति शेषः शोकशङ्कुः शोककीलः मर्म्माणि जीवितस्थानानि कृन्तन् छिन्दन् अपि किं न सोढः ।

(घ) एवम् अस्मि मन्दभागिनी पुनः अपि आयासकारिणी आर्य्यपुत्त्रस्य ।

(१) अयि खलु वासन्ति मया ।१।३।४। अयि वासन्ति मया खलु ।२।

रामः। एवमतिनिष्कम्प (१) स्तम्भितान्तःकरणस्यापि (क) मम संस्तुततत्तत्प्रियवस्तुदर्शनाद्‌द्यायमावेगः (२) तथाहि

लोलोल्लोलक्षुभितकरणोज्जृम्भणस्तम्भनार्थं (३)
यो यो यत्नः कथमपि मयाधीयते तं तमन्तः।
भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः (ख)॥

सीता। एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुक्खसंखोहेण पप्फुरिदणिअदुक्खं विअ आकम्पिदं (४) मे हिअअं (ग)।

(क) अतिनिष्कम्पस्तम्भितान्तःकरणस्य— अतिनिष्कम्पम् अतिनिश्चलं यथा तथा स्तम्भितं स्थैर्य्यमापादितम् अन्तःकरणं येन स तस्य सम्यक् स्थिरीकृतचित्तस्येत्यर्थः।

(ख) लोलात् उल्लोलम् लोलोल्लोलम् लोलोल्लोलम् अतिलोलम् अतिप्रबलमिति यावत् क्षुभितानां विकृतानां करणानाम् इन्द्रियाणाम् उज्जृम्भणस्य आवेगस्य स्तम्भनार्थं प्रतिरोधार्थं मया कथमपि कष्टेण यो यः यत्नः आधीयते क्रियते कोऽपि अनिर्वचनीयस्वरूप चेतोविकारः चित्तवैकव्यम् तोयस्य जलस्य अप्रतिहतरयः अप्रतिरुद्धवेगः ओघः प्रवाहः सैकतं सिकतामयं सेतुम् आलिम् इव तं तं यत्नं भित्त्वा भित्त्वा बलात् वेगेन अन्तः मनसि प्रसरति प्रवर्त्तते।

(ग) एतेन आर्य्यपुत्रस्य दुर्व्वारदारुणारम्भेण दुःखसंक्षोभेण प्रस्फुरितनिजदुःखम् इव आकम्पितं मे हृदयम्।

दुर्व्वारदारुणारम्भेण - दुर्व्वारः अनिवार्य्यः दारुणः दुःसहः आरम्भः

(१) अतिनिष्कम्प। १। २। ४। अतिनिष्कम्पक। ३।

(२) संस्तुतवस्तुतरप्रियदर्शनाद्‌द्यामो-ऽयमावेगः। १। २। ४। संस्तुततत्तत्प्रियवस्तुदर्शनाद्‌द्यायमावेगः। ३।

(३) करुण। १। २। ४। करण। ३।

(४) आकम्पिदं। १।२।४। कम्पति। ३।

वासन्ती । स्वगतम् । कष्टमत्यापन्नो देवः तदाक्षिपामि तावत् (१) (क) । प्रकाशम् । चिरपरिचितानेतान् जनस्थान-भागानवलोकयतु देवः (२) ।

रामः । एवमस्तु ।

इत्युत्थाय परिक्रामति ।

सीता । सन्दीवणाइं (३) एव्व दुक्खस्स पिअसही विणोदणोवाओ त्ति मण्णेदि (ख) ।

वासन्ती । सकरुणम् । देव देव (४)

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः

सा हंसैः कृतकौतुका(५) चिरमभूद्गोदावरीसैकते(६) ।

क्रिया यस्य सः तेन । दुःखसंक्षोभेण— दुःखजनितेन संक्षोभेण आवेगेन तद्दर्शनेनेत्यर्थः । प्रस्फुरितनिजदुःखम्— प्रस्फुरितम् आविर्भूतम् निजं स्वीयं दुःखमस्मिन् तत् ।

(क) अत्यापन्न' प्राप्तः । आक्षिपामि विषयान्तरव्यासक्तं करोमि ।

(ख) सन्दीपनानि एव दुःखस्य प्रियसखी विनोदनोपाय इति मन्यते ।

(१) तदन्यतः क्षिपामि तावत् ।१।२।३। तदाक्षिपामि तावत् । ४ ।

(२) चिरपरिचितानामिदानीं जन-स्थानभागानामवलोकनेनात्मान-मानन्दयतु देवः । १ । २ । ४ । चिरपरिचितानेतान् जनस्थान-भागानवलोकयतु देवः । ३ ।

(३) सन्दीवणाइं ज्जेव । १ । ३ । ४ । सन्दीवणाओ ज्जेव । २ ।

(४) वासन्ती । सकरुणम् । देव देव । १ । ३ । ४ । वासन्ती । देव देव । २ ।

(५) स्थिरकौतुका । १ । २ । ४ । कृतकौतुका । ३ ।

(६) रोधसि । १ । २ । ४ । सैकते ।३।

आयान्त्या परिदुर्म्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्य्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः (क)॥

सीता। दारुणा सि वासन्ति (१) दारुणा सि जा एदेहिं हिअअमम्मगूढसल्लघट्टणेहिं (२) पुणो पुणो मां मन्दभाइणिं अज्जउत्तं अ (३) सन्दावेसि (४) (ख)।

रामः। चण्डि जानकि इतस्ततो दृश्यसे इव नचानुकम्पसे (ग)।

हा हा देवि स्फुटति हृदयं ध्वंसते (५) देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।

(क) तन्मार्गदत्तेक्षणाः— तस्याः सीतायाः मार्गे प्रत्यागमनवर्त्मनि दत्ते अर्पिते ईक्षणे चक्षुषी येन सः तथोक्तः गोदावरीं गतायाः कृतविलम्बायाः सीतायाः प्रत्यागमनं सोत्कण्ठं प्रतीक्षमाण इत्यर्थः। हंसैः कृतकौतुका-- हंसैः गोदावर्य्यां विहरद्भिरित्यर्थः कृतं जनितं कौतुकं कौतूहलं यस्याः सा तथोक्ता। परिदुर्म्मनायितं नितान्तमुत्कण्ठाकुलहृदयम्।

(ख) दारुणा असि वासन्ति दारुणा असि या एतैः हृदयमर्म्मगूढशल्य-घट्टनैः पुनः पुनः मां मन्दभागिनीम् आर्य्यपुत्त्रं च सन्तापयसि।

दारुणा निर्दया। हृदयमर्म्मगूढशल्यघट्टनैः— हृदयमर्म्मणि गूढस्य प्रच्छन्नभावेनावस्थितस्य चिरावस्थानेन इदानीं नातिदुःखकरस्येति यावत् शल्यस्य शोकरूपस्य शङ्कोः घट्टनैः चालनैः।

(ग) चण्डि अत्यन्तकोपने।

(१) वासन्ति। १। ३। ६। सहि वासन्ति। २।
(२) सरिसेहिं।१।२। घट्टणेहिं।३।४।
(३) अज्जउत्तं वि। १। २। ४। अज्जउत्तं अ। ३।
(४) दूणावेसि। १। २। ४। सन्दावेसि। ३।
(५) ध्वंसते। १। ३। ४। स्रंसते। २।

सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि (क) ॥

इति मूर्च्छति।

सीता। हद्धी हद्धी पुणो वि पमूढो अज्जउत्तो (ख)।

वासन्ती। देव समाश्वसिहि समाश्वसिहि।

सीता। हा अज्जउत्त मं मन्दभाइणिं उद्दिसिअ सअल-जीअलोअमङ्गलाधारस्स दे (१) वारं वारं संसइदजीविद-दारुणो दसापरिणामो (२) हा हद म्हि (ग)।

इति मूर्च्छति।

(क) हा हा देवि सीते हृदयं स्फुटति विदीर्यते देहबन्धः शरीरबन्धनं ध्वंसते श्लथीभवति जगत् विश्वं शून्यं मन्ये पश्यामि अविरता अविश्रान्ता ज्वाला ज्वलनक्रिया यस्मिन् तत् यथा तथा अन्तः मनसि ज्वलामि दाहमनु-भवामि विधुरः विकलः शोकाभिभूत इति यावत् अन्तरात्मा सीदन् निरति-शयमवसादमापद्यमानः अन्धे अन्धकरणे अतिगाढे इति यावत् तमसि अन्ध-कारे मज्जति मोहः विचित्तता विष्वक् समन्तात् स्थगयति आवृणोति समस्तं वस्तुजातमिति शेषः इत्थं गते मन्दभाग्यः अहम् कथं केनोपायेन करोमि जीवितं धारयामि अथवा कथं किं करोमि कमुपायमवलम्बे।

(ख) हा धिक् हा धिक् पुनः अपि प्रमूढः आर्यपुत्रः।

(ग) हा आर्यपुत्र मां मन्दभागिनीम् उद्दिश्य सकलजीवलोकमङ्गला-धारस्य ते वारं वारं संशयितजीवितदारुणः दशापरिणामः हा हता अस्मि।

संशयितजीवितदारुणो दशापरिणामः— संशयितं स्थास्यति यास्यति वेति संशयमारूढं जीवितं जीवनं यस्मिन् स चासौ दारुणः भयावहश्चेति

(१) सअलजीअलोअमङ्गलाधारस्स दे जम्मलाहस्स। १। २। ४। सअलजीअलोअमङ्गलाधारस्स दे। ३।

(२) दसापरिणामो त्ति। १। २। ४। दसापरिणामो। ३।

तमसा । वत्से समाश्वसिहि समाश्वसिहि पुनस्त्वत्पाणिस्पर्श एव जीवनोपायो (१) रामभद्रस्य ।

वासन्ती । कथमद्यापि नोच्छ्वसिति? हा प्रियसखि सीते क्वासि सम्भावयात्मनो जीवितेश्वरम् (२) (क) ।

सीता ससम्भ्रममुपसृत्य हृदि ललाटे च स्पृशति ।

वासन्ती । दिष्ट्या प्रत्यापन्नचेतनो (३) रामभद्रः (ख) ।

राम: ।

आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून् ।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम् (ग) ॥

आनन्दनिमीलिताच्च एव । सखि वासन्ति दिष्ट्या वर्द्धसे ।

वासन्ती । देव कथमिव ।

राम: । सखि किमन्यत् पुनः प्राप्ता जानकी ।

संशयितजीवितदारुणः दशापरिणामः दशान्तरापत्तिः तवास्मिन् दशापरिणामे पदे पदे जीवितसंशयः समायाति अतएवासौ सातिशयं भयमावहति ।

(क) सम्भावय स्वसन्निधानेन सञ्जीवय ।

(ख) प्रत्यापन्नचेतनः— प्रत्यापन्ना प्रत्यागता चेतना यस्य सः तथोक्तः ।

(ग) शरीरधातून्— शरीरवर्त्तिनः धातुसंज्ञया निर्द्दिष्टान् त्वगस्थिमांसशोणितादीन् पदार्थान् ।

(१) सञ्जीवनोपायः । १ । २ ।
जीवनोपायः । ३ । ४ ।
(२) जीवेश्वरम् । १ । २ ।
जीवितेश्वरम् । ३ । ४ ।
(३) प्रत्यापन्नचेतनः । १ । ४ ।
प्रत्यापन्नजीवनः । २ ।
प्रत्युत्पन्नजीवितः । ३ ।

वासन्ती । अयि देव रामभद्र (१) क सा ।

रामः । सस्पर्शसुखमभिनीय(२) । पश्य नन्वियं पुरत एव ।

वासन्ती । अयि किमिति मर्म्मच्छेददारुणैरेभिः प्रलापैः(३) प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं दहसि माम्(४)(क) ।

सीता । ओसरिदुं(५) इच्छामि एसो उण चिरसब्भावसोम्मसीअलेण अज्जउत्तप्फंसेण दीहदारुणं वि सन्दावं झत्ति ओल्लवन्तेण (६) वज्जलेवोवणद्धो (७) विअ सिज्जन्तणीसहविवत्थो वेवदि (८) अवसो विअ मे हत्थो (ख) ।

(क) मर्म्मच्छेददारुणैः— मर्म्मणः जीवितस्थानस्य छेदेन कर्त्तनेन निरतिशयव्यथनेनेति यावत् दारुणैः दुःसहैः ।

(ख) अपसर्त्तुमिच्छामि एषः पुनः चिरसद्भावसौम्यशीतलेन आर्य्यपुत्रस्पर्शेन दीर्घदारुणम् अपि सन्तापं झटिति उल्लपता, वज्रलेपोपनद्ध इव स्विद्यन्निःसहविपर्य्यस्तः वेपते अवशः इव मे हस्तः ।

चिरसद्भावसौम्यशीतलेन— चिरसद्भावात् अविचलितात् अनुरागात् सौम्येन सुखकरेण शीतलेन सन्तापहरेण च । दीर्घदारुणम् - दीर्घं बहुकालव्यापिनम् दारुणं दुःसहञ्च । झटित्युल्लपता — झटिति शीघ्रम्

(१) अयि देव रामभद्र । १ । ४ ।
अयि देव ।२। अयि रामभद्र ।३।

(२) अनुभूय ।१। अभिनीय ।२।३।४।

(३) अतिप्रलापैः । १ । २ । ४ ।
एभिः प्रलापैः । ३ ।

(४) मां पुनर्मन्दभागिनीं दहसि ।१।४।
पुनर्मन्दभागिनीं मां दहसि ।२।
पुनर्मन्दभागिनीं दहसि माम् ।३।

(५) ओसक्किदुं ।१।४। ओसरिदुं।२।३।

(६) करन्तेण । १ । ४ । हरन्तेण । २ ।
झत्ति उल्लवन्तेण । ३ ।

(७) वज्जलेवोवणिवद्धो । १ । २ ।
वज्जलेवोवणद्धो । ३ । ४ ।

(८) सिज्जन्तणीसहविपलहत्थवेअणसीलो । १ ।
सिद्दन्तणीसहविपलहत्थो वेअणसीलो । २ ।
सिज्जन्तो अङ्गुलिणीसहं विवलहत्थो वेवदि । ३ ।
सिज्जन्तणीसहविवलहत्थो वेवदि ।४।

राम: । सखि कुत: प्रलापा: (१)

　　गृहीतो य: पूर्व्वं परिणयविधौ कङ्कणधर-
　　श्चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्य: परिचित: (क) ।

सीता । अज्जउत्त सो एव्व दाणिं सि तुमं (ख) ।

राम: ।

　　स एवायं तस्यास्तुहिनकरकौपम्यसुभगो (२)
　　मया लब्ध: पाणिर्ललितलवलीकन्दलनिभ: (ग) ॥

इति गृह्णाति ।

---

उल्लपता प्रशमयता । वज्रलेपोपनद्ध: — वज्रस्य लेपेन बन्धनेन उपनद्ध: बद्ध: अतिदृढनिबद्ध इत्यर्थ: । स्विद्यन्नि:सहविपर्य्यस्त: — स्विद्यन् घर्म्मोदक मुद्गमन् नि:सहं नितान्तं विपर्य्यस्त: जड़ीभूत: स्वव्यापाराद्विरत इति यावत् ।

(क) पूर्व्वं परिणयविधौ परिणयकार्य्ये विवाहकाले इति यावत् कङ्कणधर: धृतवैवाहिकमङ्गलसूत्र: य: प्रियाया: पाणि: गृहीत: य: अमृतशिशिरै: अमृतवत् शीतलै: तद्वत् सुखकरै: सन्तापहरैश्च स्वेच्छास्पर्शै: इच्छामात्रेण कृतै: स्पर्शै: चिरं बहुकालं परिचित: अनुभूत: ।

(ख) आर्य्यपुत्र स: एव इदानीम् असि त्वम् ।

इदानीं त्वं स: तादृश एव असि त्वयि नाणुरप्यनुरागविपर्य्ययो लक्ष्यते केवलं मद्भाग्यदोषेण मां त्यक्तवानसीति भाव: ।

(ग) तस्या: सीताया: तुहिनं हिमं करका वर्षोपल: ताभ्यां यत् औपम्यं सादृश्यं तेन हेतुना सुभग: तद्वत् शीतल इत्यर्थ: ललितं कोमलं यत् लवल्या: तदाख्यवृक्षविशेषस्य कन्दलं नवाङ्कुर: तन्निभ: अवलीनवपल्लववत् अत्यर्थं मृदुरित्यर्थ: स एवायं पाणि: कर: मया लब्ध: ।

---

(१) प्रलापा: । १ । २ ।　　(२) तुहिननिकरौपम्यसुभग: ।१।२।४।
　　प्रलाप: । ३ । ४ ।　　　　तुहिनकरकौपम्यसुभग: । ३ ।

सीता। हद्धी हद्धी अज्जउत्तफंसमोहिदाए पमादो क्खु मे संवुत्तो (१) (क)।

रामः। सखि वासन्ति आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि तत् त्वं तावदेनां धारय (२) (ख)।

वासन्ती। कष्टम् उन्माद एव।

सीता ससम्भ्रममाक्षिप्यापसर्पति (ग)।

रामः। हा धिक् प्रमादः हा धिक् प्रमादः

करपल्लवः स तस्याः सहसैव जडाज्जडः(३) परिभ्रष्टः।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः॥

(क) हा धिक् हा धिक आर्य्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः। प्रमादः अनवधानता रामेण तस्याः पाणिर्मया लब्ध इत्यभिधानात् अहं परिज्ञातेति निश्चित्य आर्य्यपुत्रस्पर्शमोहितया मया न सम्यगाचरितमिति सीतायाः स्वाधिक्षेपः।

(ख) आनन्दनिमीलितेन्द्रियः— आनन्देन प्रियापाणिस्पर्शजनितेन सुखेन निमीलितानि जडीकृतानि इन्द्रियाणि यस्य सः तथोक्तः। साध्वसेन परवान्— साध्वसेन हर्षातिशयसमुद्भूतेन वैक्लव्येन परवान् परतन्त्रः अभिभूत इति यावत्। बहोः कालादनन्तरं दुर्लभं प्रियास्पर्शसुखमनुभवतो मम सर्व्वाण्येवेन्द्रियाणि नितरामवशानि संवृत्तानि अतो नाहं प्रियां धारयितुमीशोऽस्मीत्यर्थः।

(ग) आक्षिप्य बलादाच्छिद्य रामेण धृतं स्वीयं पाणिमिति शेषः।

---

(१) पमादो क्खु संवुत्तो। १। ४। तत्त्वं तावदेनां धारय। २।
पमादो क्खु मे संवुत्तो। २। ३। तत्त्वमप्येनां धारय। ३।
(२) तत्त्वं तावदेनामवधारय। १। ४। (३) जडाज्जडः।१।२। जडात्मनः।३।४।

सीता । हद्धी हद्धी अज्ज वि अणवत्थिदत्थिमिदमूढघुम्मन्त-णअणो (१) ण पज्जवत्थावेदि अत्ताणअं (क) ।

तमसा । सस्नेहहासकौतुकं (२) निर्वर्ण्य

सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःप्रविधूतसिक्ता कदम्बयष्टिः स्फुटकोरकेव (ख) ॥

सीता । स्वगतम् (३) । अम्महे अवसेण एदेण अत्ताणएण लज्जाविद म्हि भअवदीए तमसाए किं त्ति किल एसा मण्णिस्सदि एसो दे परिच्चाओ एसो अ हिअआसङ्गो त्ति (४) (ग) ।

(क) हा धिक् हा धिक् अद्य अपि अनवस्थितस्तिमितमूढघूर्णन्नयनः न पर्य्यवस्थापयति आत्मानम् ।

अनवस्थितस्तिमितमूढघूर्णन्नयनः-- अनवस्थिते अस्थिरे स्तिमिते निष्पन्दे मूढे निर्व्यापारे विषयग्रहविधुरे इति यावत् घूर्णन्ती परिभ्रमन्ती विषयग्रहायोद्यच्छमाने इति यावत् लोचने यस्य सः तथोक्तः युगपत् चतसृणामवस्थानामसम्भवात् क्षणभेदेन तत्समावेशो बोध्यः । पर्य्यवस्थापयति प्रकृतिस्थं करोति ।

(ख) वत्सा सीता प्रियस्य रामस्य स्पर्शजनितेन सुखेन सस्वेदानि स्वेदजलाप्लुतानि रोमाञ्चितानि पुलकितानि कम्पितानि कम्पमानानि अङ्गानि यस्याः सा तथाभूता सती मरुता वायुना प्रविधूता आकम्पिता नवाम्भसा नवोदकेन सिक्ता उक्षिता स्फुटाः विकसिताः कोरकाः कलिकाः यस्याः सा तथोक्ता कदम्बयष्टिः कदम्बतरुशाखा इव जाता संवृत्ता ।

(ग) अम्महे अवशेन एतेन आत्मना लज्जापिता अस्मि भगवत्या तमसया किमिति किल एषा मंस्यते एषः ते परित्यागः एषः च हृदयासङ्गः इति ।

लज्जापिता लज्जां प्रापिता । किमिति किम् । हृदयासङ्गः हृदयानुरागः ।

---

(१) णअणो ।१।२।४। चेरणं । ३ ।
(२) सस्नेहम् । १ । २ । ४ ।
सस्नेहहासकौतुकम् । ३ ।
(३) सीता।१। सीता । स्वगतम् ।२।३।४।
(४) एसो परिच्चाओ एसो अहिमङ्गे त्ति । १ । २ । ४ ।
एसो दे परिच्चाओ एसो अ हिअआसङ्गो त्ति । ३ ।

रामः । सर्व्वतोऽवलोक्य । हा कथं (१) नास्त्येव । नन्व-करुणे वैदेहि ।

सीता । सच्चं अकरुणा म्हि जा एव्वंविधं (२) तुमं पेक्खन्ती णं धरामि एव्व जीविदं (३) (क) ।

रामः । क्वासि देवि प्रसीद (४) न मामेवंविधं परित्यक्तु-मर्हसि (५) ।

सीता । अइ अज्जउत्त विवरीदं विअ एदं (ख) ।

वासन्ती । देव प्रसीद प्रसीद स्वेनैव लोकोत्तरेण धैर्य्येण संस्तम्भयातिभूमिगतविप्रलम्भमात्मानं कुतोऽत्र मे प्रियसखी (६) (ग) ।

रामः । व्यक्तं नास्त्येव कथमन्यथा वासन्त्यपि तां न पश्येत् । अपि खलु स्वप्न एषः (७) नचास्मि सुप्तः (८) अथवा कुतो रामस्य

(क) सत्यम् अकरुणा अस्मि या एवंविधं त्वां प्रेक्षमाणा ननु धरामि एव जीवितम् ।

(ख) अयि आर्य्यपुत्त्र विपरीतम् इव एतत् ।

न मां परित्यक्तुमर्हसीति यद्वदसि तद्विपरीतम् यतः त्वमेव मां परित्यक्त-वान् नाहं त्वां परित्यक्तवती ।

(ग) अतिभूमिगतविप्रलम्भम्— अतिभूमिं हद्देः परां काष्ठां गतः विप्रलम्भः प्रियाविप्रयोगशोको यस्य तं तथोक्तम् ।

(१) कथम् । १ । २ । ४ । हा कथम् ।३।

(२) एवंविधं । १ । ३ । ४ । एव्व । २ ।

(३) धरामि ज्जेव जीअं । १ । २ । ४ ।
णं धरामि ज्जेव जीविदं । ३ ।

(४) क्वासि प्रसीद देवि । १ । २ । ४ ।
क्वासि देवि प्रसीद । ३ ।

(५) न मामेवंविधं परित्यक्तुमर्हसि ।१।
२ । ४ ।
न मां त्यक्तुमर्हसि । ३ ।

(६) कुतोऽत्र प्रियसखी मे सीता । १ ।
२ । ४ ।
कुतोऽत्र मे प्रियसखी । ३ ।

(७) स्वप्न एव स्यात् ।१।२।४। स्वप्न एषः ।३।

(८) प्रसुप्तः । १ । २ । ४ । सुप्त । ३ ।

स्वप्नः (१) सर्व्वथा स एव (२) भगवाननेकवारपरिकल्पना-
निर्म्मितो (३) विप्रलम्भः पुनः पुनरनुबध्नाति माम् (४) (क)।

सीता। मए एव्व दारुणाए विप्पलद्धो अज्जउत्तो (ख)।

वासन्ती। देव पश्य पश्य

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः
पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।
खड्गच्छिन्नजटायुपक्षतिरितः सीतां ज्वलन्तीं वह-
न्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः (ग)॥

(क) अनेकवारं बहुवारं परिकल्पनया अवास्तवसीतासमागमसाधनेन निर्म्मितः उत्पादितः स एव अनेकशः परिचितपूर्व्व इत्यर्थः भगवान् विप्रलम्भः भगवती प्रतारणा देवी माम् पुनः पुनः अनुबध्नाति अनुसरति कल्पनाबलेन सीतासमागमं साधयित्वा बहुशः प्रतारितोऽभूवम् अधुना च या प्रियापाणि स्पर्शप्रतीतिः सापि न वास्तवी पूर्व्ववत् पुनः प्रतारितोऽस्मीत्यर्थः।

(ख) मया एव दारुणया विप्रलब्धः आर्य्यपुत्त्रः।

दारुणया कठिनया। विप्रलब्धः प्रतारित.।

(ग) जटायुषा पक्षिराजेन विघटित. भग्नः पौलस्त्यस्य पुलस्त्यतनयस्य रावणस्य अयम् पुरोवर्त्ती कार्ष्णेन कृष्णवर्णेन अयसा लौहविशेषेण निर्म्मितः रथः पश्य पुरतः अग्रतः पिशाचानामिव वदनानि मुखानि येषां ते तद्वत् विकृतवदना इत्यर्थः कङ्कालम् अस्थिपञ्जरं शेषम् अवशिष्टं येषां ते तथोक्ताः एते खराः जटायुहताः रावणरथवाहिनोऽश्वविशेषाः इतः अस्मात् स्थानात् अरिः शत्रुः रावण इति यावत् खड्गेन छिन्ने जटायोः पक्षती पक्षमूले येन स तथोक्तः सन् ज्वलन्तीं स्वेन तेजसा दीप्यमानं सीतां वहन् अन्तः अभ्यन्तरे

(१) कुतो वा रामस्य निद्रा।१।२।
अथवा कुतो रामस्य स्वप्नः।३।
कुतो रामस्य निद्रा वा।४।

(२) स एवैषः।१।२।४।
स एव।३।

(३) परिकल्पितनिर्म्मितः।१।
परिकल्पितनिर्म्मीता।२।
परिकल्पनानिर्म्मितः।३।४।

(४) अनुबध्नाति।१।२।४।
अनुबध्नाति माम्।३।

सीता। सभयम्। अज्जउत्त तादो वावादीअदि अहं अ अवहरीआमि परित्ताहि परित्ताहि (क)।

रामः। सवेगमुत्थाय। आः पाप, तातप्राणसीतापहारिन् क्व यासि।

वासन्ती। अयि देव राक्षसकुलप्रलयधूमकेतो (१) अद्यापि ते मन्युविषयः (ख)।

सीता। अम्मो उम्मत्तिअ म्हि संवुत्ता (ग)।

रामः। अन्वर्थ एवायमधुना (२) प्रलापो वर्त्तते (घ)।

उपायानां भावादविरतविनोदव्यतिकरो (३)
विमर्दैर्वीराणां जगति जनितात्यद्भुतरसः।

व्याकुला चञ्चला विद्युदस्य सः तादृशः अम्बुदः मेघ इव द्याम् आकाशम् अभ्युदस्थात् अभ्युत्पपात।

(क) आर्य्यपुत्त्र तातः व्यापाद्यते अहं च अपह्रिये परित्रायस्व परित्रायस्व।

तातः जटायुः।

(ख) राक्षसकुलप्रलयधूमकेतो— राक्षसकुलस्य प्रलयधूमकेतो समूलोच्छेदक निःशेषनिपातितनिशाचरवंशेत्यर्थः प्रलयकालोदितो धूमकेतुः सर्व्वं क्षयं सूचयतीति प्रसिद्धिः। अद्यापि ते मन्युविषयः— अद्यापि अधुनापि ते तव मन्योः क्रोधस्य विषयः स्थानम् अस्ति किम् राक्षसकुलस्य समूलविलोपादधुना तव क्रोधप्रकाशस्य स्थानं नास्तीत्यर्थः।

(ग) अम्मो उन्मत्ता अस्मि संवृत्ता।

उन्मादं विना चिरातीते रावणजटायुसंवादे वर्त्तमानत्वप्रतीतेरसम्भवात् उन्मत्तास्मीति सीतोक्तिः।

(घ) अन्वर्थः सार्थकः अपरिहार्य्य इति यावत्। प्रलापः विलापः।

(१) प्रलयधूमकेतो। १। २। प्रलयकेतो। ३। ४।

(२) अन्यथैवायम्। १। ३। ४। अन्वर्थ एवायम्। २।

(३) अविरतविनोदव्यतिकरैः। १। २। ३। ४।

वियोगो मुग्धाच्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरयं त्वप्रतिविधः (१) (क) ॥
सीता । णिरवधि त्ति हा हद म्हि मन्दभाइणी (ख) ।
इति रोदिति ।
रामः । हा कष्टम्
व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्य्यं हरीणां वृथा
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्त्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्म्मतनयः कर्त्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये(२) त्वं प्रिये क्वासि मे(ग) ॥

(क) उपायानां सीतोद्धारसाधनानां भावात् सद्भावात् अविरतः अविच्छिन्नः विनोदस्य विरहदुःखापनोदनस्य व्यतिकरः सम्पर्को यस्मिन् स तथोक्तः वीराणां रावणकुम्भकर्णमेघनादादीनां विमर्द्दैः विनाशैः जगति जनितः उत्पादितः अति उत्कटः अद्भुतरसः विस्मयरसो येन सः तथोक्तः सः तादृशः मुग्धाक्ष्याः सुलोचनायाः सीतायाः वियोगः विरहः रिपोः रावणस्य घातः उच्छेदः अवधिः अन्तो यस्य सः तादृशः अभूत् खलु अयम् इदानीन्तनस्तु विरहः नास्ति प्रतिविधा प्रतीकारो यस्य सः प्रतीकाररहित इत्यर्थः अत एव निः नास्ति अवधिः अन्तो यस्य सः कथं केन प्रकारेण तूष्णीं मौनमवलम्ब्य विलापं विनेत्यर्थः सह्यः सोढुं शक्यः विना विलापमीदृशस्य वियोगदुःखस्य सहनमशक्यमेवेति भावः । इत्थं विलापस्यापरिहार्य्यतया अन्वर्थं एवायमधुना प्रलापो वर्त्तते इत्युक्तम् । उपविरतविनोदव्यतिकरैः इति सार्व्वत्रिकः पाठः स तु न सम्यक् सङ्गच्छते इति मत्वा पाठान्तरं परिकल्पितम् ।

(ख) निरवधिः इति हा हता अस्मि मन्दभागिनी ।

(ग) यत्र यस्मिन् स्थाने कपीन्द्रस्य सुग्रीवस्य सख्यं सहायत्वम् अपि व्यर्थम् निष्फलम् पूर्व्वं तत्साहाय्यबलेनैव सीता समुद्धृतासीत् हरीणां कपिसैन्यानां वीर्य्यं

(१) निरवधिरिदानीन्तु विरहः ।१।२। निरवधिरयं त्वप्रतिविधः । ४ । निरवधिरयन्तु प्रविरहः । ३ । (२) अविषयः ।१।३।४। अविषये ।२।

सीता। बहु मण्णाविद म्हि पुव्वविरहं (१) (क)।

रामः। सखि वासन्ति दुःखायैवेदानीं रामस्य दर्शनं सुहृदां (२) कियच्चिरं त्वां रोदयिष्यामि (३) तदनुजानीहि मां गमनाय।

सीता। सोद्वेगमोहं (४) तमसामवलम्ब्य। भअवदि तमसे कधं गच्छदि (५) एव्व अज्जउत्तो (ख)।

तमसा। वत्से समाश्वसिहि समाश्वसिहि। नन्वावामप्या-

पराक्रमः वृथा पूर्व्वं तेषां पराक्रमेणैव राक्षसकुलध्वंसः साधित आसीत् जाम्बवतः ऋक्षराजस्य प्रज्ञा धीशक्तिरपि वृथा इति शेषः तत्प्रज्ञाबलं विना लङ्काजयस्य सम्भावना नासीदिति भावः यत्र वायोः पुत्त्रस्य हनूमतोऽपि गतिः न नास्ति पूर्व्वं तेनैव जलधिमुल्लङ्घ्य लङ्कां गत्वा सीतासन्देश आहृत आसीत् विश्वकर्म्मणः तनयः पुत्त्रो नलोऽपि यत्र मार्गं पन्थानं कर्त्तुं निर्म्मातुं न क्षमः समर्थः पूर्व्वं तेनैव समुद्रे सेतुर्बद्ध आसीत् सौमित्रेः लक्ष्मणस्यापि पत्रिणां बाणानाम् अविषये अगोचरे तत्र तादृशे क कस्मिन् स्थाने मे मम प्रिये जानकि असि तिष्ठसि।

(क) बहु मानिता अस्मि पूर्व्वविरहम्।

आर्य्यपुत्त्रेणाहं पूर्व्वविरहं दशाननहरणनिबन्धनं वियोगं बहु मानिता· स्मि. आर्य्यपुत्त्रवचनं श्रुत्वा पूर्व्वविरहं बहु मन्ये इत्यर्थः।

(ख) भगवति तमसे कथं गच्छति एव आर्य्यपुत्त्रः। \

(१) तं पुव्वविरहं।१।२।४।
पुव्वविरहं।३।

(२) सुहृदामिदानीं दुःखायैव रामदर्शनम्।१।२।४।
दुःखायैवेदानीं रामस्य दर्शनं सुहृदाम्।३।

(३) कियच्चिरं त्वां रोदयिष्यति।१।
नन्विदं कियच्चिरं त्वां रोदयिष्यति।२।
कियच्चिरं त्वां रोदयिष्यामि।३।४।

(४) सोद्वेगमोहम्।१।३।४। सोद्वेगम्।२।

(५) गच्छदि।१।२।४। कधं गच्छदि।३।

युष्मतोः कुशलवयोर्वर्षग्रन्थिमङ्गलं (१) सम्पादयितुं भागीरथी-पादान्तिकमेव गच्छावः।

सीता। भअवदि पसीद खणमेत्तं वि दाव दुल्लहं जणं पेक्खामि (क)।

रामः। अस्ति चेदानीमश्वमेधाय सहधर्म्मचारिणी मे—

सीता। सोत्कम्पम्(२)। अज्जउत्त का सा (३) (ख)।

रामः। हिरण्मयी सीताप्रतिकृतिः (४)।—

सीता। सोच्छ्वासं (५) सास्रम्। अज्जउत्तो दाणिं सि तुमं अम्हे, उक्खाणिदं मे दाणिं (६) परिच्चाअलज्जासल्लं अज्जउत्तेण (ग)।

रामः। तत्रापि तावद्वाष्पदिग्धं चक्षुर्विनोदयामि।

सीता। धस्सा सा जा अज्जउत्तेण बहु मण्णअदि जा अ अज्जउत्तं विणोदअन्ती आसाणिबन्धणं जादा जीअलोअस्स (घ)।

(क) भगवति प्रसीद क्षणमात्रम् अपि दुर्लभं जनं प्रेक्षे।

(ख) आर्य्यपुत्र का सा।

(ग) आर्य्यपुत्रः इदानीम् असि त्वम् अस्माके उत्खातं मे इदानीं परित्यागलज्जाशल्यम् आर्य्यपुत्रेण।

(घ) धन्या सा या आर्य्यपुत्रेण बहु मन्यते या च आर्य्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य।

---

(१) वर्षवर्द्धनमङ्गलम्। १। २। ४। वर्षग्रन्थिमङ्गलम्। ३।

(२) स्वगतम्। १। साक्षेपं स्वगतम्। २। सोत्कम्पम्। ३। ४।

(३) का। १। २। ४। का सा। ३।

(४) सीतायाः प्रतिकृतिः। १। २। ४। सीताप्रतिकृतिः। ३।

(५) सोच्छ्वासम्। १। २। ४। सोल्लासम्। ३।

(६) दाणिं मे। १। २। ४। मे दाणिं। ३।

तमसा । सस्मितस्नेहास्रं परिष्वज्य । अयि वत्से एवमात्मा स्तूयते ।

सीता । सलज्जमधोमुखी स्वगतम् । परिहसिद म्हि भअवदीए (१) (क) ।

वासन्ती । महानयं व्यतिकरोऽस्माकं प्रसादः (२) गमनं प्रति पुनर्यथा कार्य्यपरिहाणिर्न भवति(३) तथास्ताम्(४) (ख) ।

सीता । पड़िउला दाणिं मे वासन्ती संवुत्ता (ग) ।

तमसा । एहि वत्से (५) गच्छावः ।

सीता । सकष्टम् (६) । एव्वं करेम्ह (घ) ।

तमसा । कथं वा गम्यते यस्यास्तव

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः ।
मर्म्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते (ङ) ॥

(क) परिहसिता अस्मि भगवत्या ।

(ख) महानयं व्यतिकरोऽस्माकं प्रसादः— अयं व्यतिकरः समागमः अस्माकं महान् प्रसादः अनुग्रहः अनेन भवत्समागमलाभेन सविशेषम् आत्मानमनुगृहीतं मन्ये अतो नाहं भवद्गमनमभिरोचये इत्यर्थः ।

(ग) प्रतिकूला इदानीं मे वासन्ती संवृत्ता ।

रामगमनाभ्यनुज्ञानात् प्रतिकूलत्वम् ।

(घ) एवं कुर्व्वः ।

(ङ) वा अथवा कथं गम्यते त्वया इति शेषः यावत् रामो नयनविषयं नात्येतीत्यर्थः यस्यास्तव दयिते प्रिये रामे प्रत्युप्तस्य निखातस्येव तृष्णया उत्कट-

(१) भअवदीए तमसाए । १ । २ । भअवदीए । ३ । ४ ।

(२) प्रमादः । १ । २ । ४ । प्रसादः । ३ ।

(३) कार्य्यहानिः । १ । २ । कार्य्यपरिहाणिः । ३ । ४ ।

(४) तथास्ताम् ।१।२।४। तथास्तु ।३।

(५) वत्से एहि ।१।२।४। एहि वत्से । ३।

(६) सीता । सकष्टम् ।१।२।४। सीता ।३।

सीता । णमो णमो अपुव्वपुस्सजणिदद्दंसणाणं (१) अज्ज-उत्तचरणकमलाणं (क) ।

इति मूर्च्छति ।

तमसा । वत्से समाश्वसिहि समाश्वसिहि ।

सीता । समाश्वस्य । किअच्चिरं वा मेहन्तरेण पुण्णिमा-चन्दस्स दंसणं (ख) ।

तमसा । अहो संविधानकम् (ग)

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान् ।
आवर्त्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम् (घ) ॥

दर्शनेच्छया दीर्घस्य दीर्घभावमिव आपन्नस्य चक्षुषः मर्म्मच्छेदपरैः मर्म्मभेद-कारिभिः यत्नैः व्यापारैः आकर्षैः दयितात् प्रत्याहरणं न समाप्यते यावत् रामो दृष्टिपथे वर्त्तते तावत्तस्मात् तत्र नयनप्रत्यानयनमशक्यमेव गमनानुरोधेन नयन-प्रत्यानयनार्थं क्रियमाणानां यत्नानां रामदर्शनव्याहन्तृत्वात् मर्म्मव्यथकत्वम् ।

(क) नमः नमः अपूर्व्वपुण्यजनितदर्शनानाम् आर्य्यपुत्त्रचरणकमलानाम् ।

अपूर्व्वपुण्यजनितदर्शनानाम् — अपूर्व्वेण उत्कटेन पुण्येन जनितं दर्शनं येषां तानि तेषाम् मया किमप्युत्कटं पुण्यमर्जितमासीत् अद्य तद्बलेनार्य्यपुत्त्र-चरणदर्शनं वृत्तमिति भावः ।

(ख) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम् ।

मेघान्तरेण चन्द्रमण्डलमावृण्वतां मेघानामपसरणात्मकेन अवकाशेन कियच्चिरं कियत्क्षणं वा पूर्णिमाचन्द्रस्य दर्शनं घटते ईदृश्यामवस्थायां चन्द्र-दर्शनमिव आर्य्यपुत्त्रदर्शनं दुर्लभं क्षणिकञ्च वृत्तमिति भावः ।

(ग) संविधानकम् कार्य्यकारणभाववैचित्र्यम् ।

(घ) एकः करुणो रसः शोक एव निमित्तभेदात् कारणवैचित्र्यात् भिन्नः

(१) कदाचिदपुण्यजनादर्शनीयानां।१।२।४। अपुव्वपुस्सजणिददंसणाणं । ३ ।

रामः । विमानराज (१) इत इतः ।

इति सर्व्वे उत्तिष्ठन्ति (२) ।

तमसावासन्त्यौ । सीतारामौ प्रति ।

अवनिरमरसिन्धुः सार्द्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।
स च मुनिरनुयातारुन्धतीको वशिष्ठ-
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय (क) ॥

इति निष्क्रान्ताः सर्व्वे ।

छाया नाम

## तृतीयोऽङ्कः ।

अनेकविधत्वेनावभासमानः सन् पृथक् पृथक् विभिन्नप्रकारानिव विवर्त्तान् विकारान् रूपभेदानिति यावत् आश्रयते अवलम्बते यथा अम्भः जलम् आवर्त्त-बुद्बुदतरङ्गमयान् विकारान् रूपभेदान् आश्रयते तु किन्तु तत् समग्रम् आवर्त्तादिकं सलिलं जलमेव यथा जलस्य आवर्त्तादयो रूपभेदाः न पदार्थान्तराणि तथैव शोकस्य सीतायां लक्षिता हर्षविषादादयो रूपभेदा इत्यर्थः ।

(क) अवनिः पृथ्वी अमरसिन्धुः सुरनदी गङ्गा अस्मद्विधाभिः अस्मा-दृशीभिः तमसावासन्तीप्रभृतिभिः नदीभिस्तापसीभिश्च सार्द्धं सह तमसा-पक्षे अस्मादृश्यो नद्यः वासन्तीपक्षे अस्मादृश्यस्तापस्य इत्यर्थः छन्दसाम् आम्नायादन्येषाम् आद्यः प्रथमः प्रयोक्ता प्रवर्त्तकः सः कुलपतिः वाल्मीकिश्च अनुयाता सहधर्म्मचारिणीत्वेन अनुगामिनी अरुन्धती यस्य स वशिष्ठो मुनिश्च भूयसे प्रभूताय मङ्गलाय इष्टलाभाय त्वयि भद्रम् आशिषं वितरतु प्रयुङ्क्ताम् ।

(१) अयि विमानराज । १ । २ । ४ । विमानराज । ३ ।

(२) इति सर्व्वे उत्तिष्ठन्ति ।१।२।४। इत्युत्तिष्ठन्ति सर्व्वे । ३।

# चतुर्थोऽङ्कः ।

---

ततः प्रविशतस्तापसौ ।

एकः । सौधातके दृश्यतामद्य भूयिष्ठसन्निधापितातिथि-जनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रम-पदस्य (क) । तथाहि

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्य्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य (१) सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्य्यते (ख) ॥

(क) भूयिष्ठसन्निधापितातिथिजनस्य— भूयिष्ठम् अतिबाहुल्येन सन्निधापिताः उपस्थापिताः अतिथिजनाः यस्मिन् सः तस्य तस्मिन् दिने वाल्मीकेराश्रमपदे बहूनामतिथीनां समागम आसीदित्यर्थः । समधिकारम्भरमणीयता— समधिकैः प्रभूतैः आरम्भैः अतिथिपरिचर्य्यानिबन्धनैः पाकाद्यनुष्ठानैः रमणीयता मनोहरता ।

(ख) तपोवनमृगः आश्रममृगः सद्यःप्रसूतया अचिरप्रसूतया प्रियया मृग्या पीतात् अभ्यधिकम् अतिरिक्तम् अवशिष्टमिति यावत् उष्णम् ईषदुत्तप्तं मधुरं सुरसञ्च नीवारौदनस्य तृणधान्यभक्तस्य मण्डं पर्य्याप्तं प्रकामम् आचामति पिबति अचिरप्रसूततया प्रियायाः पर्य्याप्तस्याहारस्यावश्यकत्वात् स्नेहवशेन तां प्रथमं पाययित्वा पश्चात् स्वयं पिबतीत्यर्थः । किञ्च सर्पिष्मतः सघृतस्य घृतेन सह पक्वस्येत्यर्थः भक्तस्य ओदनस्य स्फुरता प्रसर्पता गन्धेन

(१) भक्तस्य । १ । २ । ४ । हव्यस्य । ३ ।

सौधातकिः । आअदं अणज्झाअकारणं सविसेसभूदं अज्ज जिस्सकुच्चाणं (क) ।

प्रथमः । विहस्य । अपूर्व्वः कोऽपि (१) बहुमानहेतुर्गुरुषु सौधातके (ख) ।

सौधातकिः । भो भण्डाअण किंणामधेओ एसो (२) महन्तस्स ट्ठविरसत्थस्स धुरन्धरो अज्ज चीरधारओ अदिधी (३) आअदो (ग) ।

भाण्डायनः । धिक् प्रहसनं नन्वयमृष्यशृङ्गाश्रमादरुन्धती-

मनाक् ईषत् अनुसृतः अनुगतः तत्सहित इत्यर्थः कर्कन्धूः बदर्य्याः फलैः मिश्राणां मिलितानां शाकानां पचनस्य पाकस्य आमोदः सौरभातिशयः परि-स्तीर्य्यते सर्व्वतः विस्तीर्य्यते वायुनेति शेषः ।

(क) आगतम् अनध्यायकारणं सविशेषभूतम् अद्य जीर्णकूर्च्चानाम् ।

जीर्णं जरसा शुक्लीकृतं कूर्च्चं दाढिका येषां ते तेषां वृद्धानामस्मद्गुरूणा-मित्यर्थः अद्य सविशेषभूतं केनापि कारणेनानतिक्रमणीयम् अनध्यायस्य स्वाध्यायवर्जनस्य कारणं महाजनसमागमरूपम् आगतम् उपस्थितम् ।

(ख) सौधातके गुरुषु अपूर्व्वः असाधारणः कोऽपि बहुमानहेतुः गौरव-कारणम् अस्तीति शेषः गुरुषु ईदृश किमप्यस्ति येन ते बहुमानमर्हन्ति अतस्तव-तानुद्दिश्य जीर्णकूर्च्चाणामित्येवंरूपः परिहासद्योतकशब्दप्रयोगो न युज्यत एवेत्यर्थः ।

(ग) भोः भाण्डायन किन्नामधेयः एषः महतः स्थविरसार्थस्य धुरन्धरः अद्य अतिथिः आगतः ।

स्थविरसार्थस्य वृद्धसमवायस्य । धुरन्धरः प्रधानम् । चीरधारकः जीर्णं छिन्नञ्च वासो वसानः ।

(१) कोऽपि ।१।३।४। कोऽपि ते । २ । (३) अदिध्रो । १ । २ । ४ ।
(२) एसो दाणीं । १ । ४ । एसो ।२।३। चीरधारको अदिधी । २ ।

पुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान् वशिष्ठः प्राप्तः तत् किमेवं प्रलपसि (क)।

सौधातकिः। हं वसिट्ठो (ख)।

भाण्डायनः। अथकिम्।

सौधातकिः। मए उण जाणिदं वग्घो वा विओ वा एसो त्ति (ग)।

भाण्डायनः। आः किमुक्तं भवति।

सौधातकिः। तेन परावडिदेण एव्व सा वराइआ कल्लाणिआ (१) मड़मड़ाइदा (घ)।

भाण्डायनः। समांसो मधुपर्क इत्याम्नायं बहु मन्यमानाः श्रोत्रियाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिन इति हि धर्म्मसूत्रकाराः समामनन्ति (२) (ङ)।

(क) धिक् प्रहसनम्— प्रहसनं परिहासं धिक् परिहासो न युज्यते इत्यर्थः सौधातकिवाक्ये चोरधारक इत्यनेन विशेषणेन परिहासस्य बोधितत्वात् तद्वारणार्थमिदमुक्तम्।

(ख) हं वशिष्ठः।

(ग) मया पुनः ज्ञातं व्याघ्रः वा वृकः वा एषः इति।

(घ) तेन परापतितेन एव सा वराकी कल्याणी मडमडायिता।

परापतितेन उपस्थितेन। वराकी दीना। कल्याणी वत्सतरी। मडमडायिता मड मड इतिशब्दं जनयित्वा भक्षिता।

(ङ) स्नातकादीनामर्हणार्थं पात्रे निहितं दधिसंयुक्तं मधु मधुपर्कः स च समांसः मांससहितः कर्त्तव्यः इति इत्येवमादिरूपम् आम्नायं वेदं बहु मन्य-

(१) कल्लोड़िआ। १। ४।
कल्लाणिआ। २। ३।
(२) तं हि धर्म्मसूत्रकाराः समामनन्ति। १। २। ४।
इति हि धर्म्मसूत्रकाराः संस्मरन्ति। ३।

सौधातकिः । भो णिग्गहीदो सि (क) ।

भाण्डायनः । कथमिव ।

सौधातकिः । जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा अज्ज एव्व पच्चाअदस्स राएसिणो जणअस्स भअवदा वम्मीएण (१) दहिमहूहिं एव्व णिव्वत्तिदो महुवक्को वच्छदरी उण विसज्जिदा (ख) ।

भाण्डायनः । अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते निवृत्तमांसस्तु तत्रभवान् जनकः (ग) ।

मानाः आद्रियमाणाः सगौरवमनुसरन्त इति यावत् गृहैः दारैः मेधन्ते सङ्गच्छन्ते इति गृहमेधिनः गृहाश्रमिणः अभ्यागताय गृहागताय श्रोत्रियाय वेदविदुषे ब्राह्मणाय वत्सतरीं प्रौढां गोवत्सां महोक्षं महान्तम् उक्षाणां वृषभं महाजं महान्तम् अजं छागं निर्वपन्ति ददति तत्परिचर्य्यायां नियोजयन्तीति यावत् धर्म्मसूत्रकाराः धर्म्मशास्त्रप्रवर्त्तकाः इति एवं समामनन्ति संस्मरन्ति हि अतएवाद्य वशिष्ठपरिचर्य्यार्थं वत्सतरी विशसितेत्यर्थः ।

(क) भोः निगृहीतः असि ।

निगृहीतः पराभूतः स्वपक्षसमर्थनविधुर इति यावत् यतो मधुपर्कानुरोधेन जीवहिंसा न शास्त्रार्थः तथात्वे सर्व्वत्रैव तदनुष्ठानं स्यादिति भावः ।

(ख) येन आगतेषु वशिष्ठमिश्रेषु वत्सतरी विशसिता अद्य एव प्रत्यागतस्य राजर्षेः जनकस्य भगवता वाल्मीकिना दधिमधुभिः एव निर्वर्त्तितः मधुपर्कः वत्सतरी पुनः विसृष्टा ।

(ग) अनिवृत्ता मांसात् अनिवृत्तमांसाः मांसभक्षणरताः तेषां तादृशानामभ्यागतानाम् ऋषयः धर्म्मशास्त्रप्रवर्त्तका मुनयः एवं समांसमधुपर्करूपं कल्पं विधिं मन्यन्ते अनुजानन्ति भगवान् वशिष्ठः अनिवृत्तमांसः अतस्तदभ्या-

(१) वम्मीएण वि । १ । २ । ४ ।   वम्मीएण णिद्धिअ । २ ।

सौधातकिः। किं णिमित्तं (क)।

भाण्डायनः। स तदैव सीतादेव्याः (१) तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने (२) तपस्तप्यमानस्य (ख)।

सौधातकिः। तदो किंत्ति आअदो (ग)।

भाण्डायनः। चिरन्तनप्रियसुहृदं प्राचेतसं द्रष्टुम्।

सौधातकिः। अवि अज्ज सम्बन्धिणीहिं समं संवुत्तं (३) से दंसणं णव त्ति (घ)।

भाण्डायनः। सम्प्रत्येव भगवता वशिष्ठेन देव्याः कौशल्यायाः सकाशं भगवत्यरुन्धती प्रहिता यत् स्वयमुपेत्य वैदेहो द्रष्टव्य इति (४)।

सौधातकिः। जधा एदे सव्वे त्थविरा (५) परप्परं



गमे वत्सतरी विशसिता तत्रभवान् जनकस्तु निवृत्तमांसः निवृत्तो मांसात् मांसभक्षणविरत इत्यर्थः अतस्तदभ्यागमे वत्सतरी विसृष्टा।

(क) किं निमित्तम्।

किं निमित्तम्— केन हेतुना जनको मांसभक्षणाद्विरतः।

(ख) वैखानसः वानप्रस्थः। कतिपये संवत्सराः अतीता इति शेषः।

(ग) ततः किमिति आगतः।

(घ) अपि अद्य सम्बन्धिनीभिः समं संवृत्तम् अस्य दर्शनं नवा इति।

(१) देव्याः सीतायाः। १। २। ४।
सीतादेव्याः। ३।

(२) चन्द्रद्वीपे तपोवने। १। ४।
चन्द्रद्वीपतपोवने। २। ३।

(३) संवुत्तं। १। २। ४। आदं। ३।

(४) द्रष्टव्य इति वक्तुम्। १। २। ४।
द्रष्टव्य इति। ३।

(५) एदे सव्वे त्थविरा। १।
एदे त्थविरा। २।
एदे सव्वेजेठेरा। ३। ४।

मिलिदा (१) तधा अम्हे वि वडुएहिं समं मिलिअ अणज्झाअ-
महूसवं खेलन्ता सम्भावेम्ह (क)।

इति परिक्रामतः।

भाण्डायनः। तदयं ब्रह्मवादी (ख) पुराणराजर्षिर्जनकः
प्राचेतसवशिष्ठावुपास्य(२) सम्प्रत्याश्रमवहिर्वृक्षमूलमधितिष्ठति।
य एषः

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते।

अन्तःप्रदीप्त (३) दहनो ज्वलन्निव वनस्पतिः (ग)॥

इति निष्क्रान्तौ।

## विष्कम्भकः।

(क) यथा एते सर्व्वे स्थविराः परस्परं मिलिताः तथा आवाम् अपि वटुभिः
समं मिलित्वा अनध्यायमहोत्सवं खेलन्तौ सम्भावयावः।

सम्भावयावः प्रतिपालयावः।

(ख) ब्रह्मवादी अधीतवेदवेदान्तः ब्रह्मचिन्तनरतो वा।

(ग) नित्यानुषक्तेन सततसन्निविष्टेन। ज्वलन् दाहक्लेशमनुभवन्।

---

(१) परप्परमिलिदा। १। २। (२) उपास्य।१।२।४। उपगम्य। ३।
परप्परं मिलिदा। ३। ४। (३) प्रसुप्त।१।२। प्रदीप्त।३। प्रक्षुप्त।४।

ततः प्रविशति जनकः।

जनकः।

अपत्ये यत्तादृग्‌दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन् मर्म्माणि क्रकच इव मन्युर्विरमति (क)॥

कष्टम् एवं नाम जरसा दुःखेन च दुरासदेन भूयः पराक-सान्तपनप्रभृतिभिस्तपोभिरात्तरसधातुः अनुपयुज्यमानो (१) नाद्यापि मे दग्धदेहः(२) पतति (ख)। अन्धतामिस्रा ह्यसूर्य्या

(क) अपत्ये तनयायां सीतायां तादृक् तथाविधम् अदृष्टचरमश्रुतपूर्व्वमिति यावत् यत् दुरितं निर्व्वासनरूपमनिष्टम् अभूत् अघटत महता तीव्रेण तीक्ष्णेण अतिदुःसहेनेति यावत् व्रणितं क्षतं हृदयं येन तत् तथाविधेन अत एव व्यथयता व्यथां जनयता तेन दुरितेन विषक्तः उत्पादितः पटुः दृढः व्यासङ्गान्तरैरपसारयितुमशक्य इति यावत् धारावाही अविच्छेदेन प्रवर्त्त-मानः चिरेणापि दीर्घकालातिक्रमेऽपि नव इव अचिरप्रवृत्त इव प्रतीयमान-क्रकचः करपत्रम् इव मर्म्माणि जीवितस्थानानि निकृन्तन् छिन्दन् मे मम मन्युः शोकः न विरमति विश्राम्यति।

(ख) दुरासदेन दुःसहेन। भूयः पराकसान्तपनप्रभृतिभिस्तपोभिरात्तरस-धातुः— "द्वादशाहोपवासेन पराकः परिकीर्त्तित इत्युक्तलक्षणः पराकः गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकैकं प्रत्यहं पीत्वा अहोरात्र-मभोजनम्। कृच्छ्रः सान्तपनो नाम सर्व्वपापप्रणाशन इत्याद्युक्तलक्षणः सान्त-पनः तत्प्रभृतिभिः तपोभिः व्रतैः भूयः बाहुल्येन आत्ताः गृहीताः रसधातवः

---

(१) अनुपयुज्यमानः। १। २। ४। (२) दग्धदेहः। १। २। ४।
अनुपदृश्यमानः। ३। देहो दग्धः। ३।

नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते ये आत्मघातिन इत्येवमृषयो मन्यन्ते (क)। अनेकसंवत्सरातिक्रमेऽपि च प्रतिक्षणपरिभावनयास्पष्टनिर्भासः (१) प्रत्यग्र इव दारुणो न मे दुःखसंवेगः प्रशाम्यति (ख)। अयि मातर्देवयजनसम्भवे देवि सीते ईदृशस्ते निर्माणभागः परिणतो येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते। हाहा पुत्रि

अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्ध (२) जल्पितं ते (ग)॥

यस्य सः व्याप्तरमधातुः शोषित इत्यर्थः रसः शरीरवर्त्ती द्रवपदार्थविशेषः धातवः मांसशोणितप्रभृतयः। अनुपयुज्यमानः अन्नरसादिना पुष्टिमनाप्नुवन्।

(क) अन्धतामिस्राः— अन्धेन अन्धङ्करणेन अतिगाढेनेति यावत् तमिस्रेण अन्धकारेण निरन्तरमावृताः अन्धतामिस्राः। असूर्य्याः सूर्य्योदयरहिताः। तेभ्य प्रतिविधीयन्ते तदर्थं निर्दिश्यन्ते पापक्षयं यावत् ते तत्र वसन्तीत्यर्थः तेषु वासश्च निरतिशयक्लेशकरः अन्यथा दुःसहदुःखपरिहाराय आत्मघाती भवेयमिति भावः। अत्र वाजसनेयसंहितोपनिषत्

असूर्य्या नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ३॥

(ख) प्रतिक्षणपरिभावनयास्पष्टनिर्भासः प्रत्यग्र इव दारुण• प्रतिक्षणम् अविरतं परिभावनया परिचिन्तनेन स्पष्टः स्फुटः निर्भासः स्फुरणं यस्य सः तथोक्तः अविरतपरिचिन्तनेन सदा मनसि जागरूक इत्यर्थः अत एव प्रत्यग्रः नूतनः इव दारुणः दुःसहः।

(ग) अनियते नियमरहिते अहेतुके इति यावत् रुदितस्मिते रोदन-

(१) प्रतिक्षणपरिभावनास्पष्टनिर्भासः ११।२।४। प्रतिक्षणभावनया स्पष्टनिर्भासः।३।

(२) मुग्ध।१।२।४। मञ्जु।२।

भगवति वसुन्धरे सत्यमतिदृढासि (क)

त्वं वह्निर्मुनयो वशिष्ठगृहिणी गङ्गा च (१) यस्या विदु-
र्माहात्म्यं यदिवा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती तद्वत्तु या दैवतं (२)
तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः (ख) ॥

नेपथ्ये

इत इतो भगवतीमहादेव्यौ ।

जनकः । दृष्ट्वा (३) । अये गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती (ग) । उत्थाय । कां (४) पुनर्महादेवीत्याह ।

हसिते यस्मिन् तत् तथोक्तम् विराजन्ति शोभमानानि कतिपयानि अल्प-संख्यकानि कोमलदन्तरूपाणि कुड्मलाग्राणि मुकुलशिरोभागाः यस्मिन् तत् तथोक्तम् स्खलत् विशीर्यत् असम्यगुच्चरदिति यावत् असमञ्जसम् असमग्रम् मुग्धं मनोहरं जल्पितं भाषितं यस्मिन् तत् तथोक्तम् शिशोः शैशवे स्थितायाः ते तव वदनकमलकं मुखपङ्कजं स्मरामि ।

(क) अतिदृढा अतिकठिना ।

(ख) यदिवा अथवा । विद्यां वागिव — वाक् सरस्वती देवी विद्याम् इव अथवा वाक् उपनिषद्रूपा विद्यां तत्त्वज्ञानमिव । तद्वत्तु या दैवतम्— तद्वत् वह्निगङ्गाभास्करादिवत् या सीता दैवतं देवतारूपेण माननीया । तस्या-स्त्वमित्यादि — हे दारुणे कठिने तस्याः तादृश्याः दुहितुः तनयायाः तथा तेन प्रकारेण विशसनं पूर्णगर्भावस्थायामरण्ये परित्यागरूपं निहननं कथं केन प्रकारेण अमृष्यथाः सोढवती एतत्सहनमाश्चर्य्यममिव मे प्रतिभातीति भावः ।

(ग) गृष्टिना तदाख्येन कञ्चुकिना ।

(१) गङ्गा हि ।१।४। गङ्गा च ।२।३। (३) जनकः ।१।३।४।
(२) तद्वत्तु या देवतम् ।१।३।४। जनकः । दृष्ट्वा ।२।
मूर्छिं गतायाः पुरः ।२। (४) क्वमाम् ।१।३।४। काम् ।२।

निरूप्य । हा कथं महाराजदशरथस्य धर्म्मदाराः (१) प्रियसखी मे कौशल्या क एतत् (२) प्रत्येति सैवेयमिति ।

आसीदिदं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा ।
कष्टं बतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विपाकः (क) ॥

अयमपरः पापो (३) दशाविपर्य्यासः (ख)

य एव मे जनः पूर्व्वमासीन्मूर्त्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥

ततः प्रविशत्यरुन्धती कौशल्या कञ्चुकी च ।

अरुन्धती । ननु ब्रवीमि (४) द्रष्टव्यः स्वयमुपेत्य वैदेह

(क) इयं मे प्रियसखी कौशल्या दशरथस्य गृहे तस्मिन् जीवतीत्यर्थः यथा श्रीः श्रीः लक्ष्मीः इव आसीत् वा अथवा श्रीः एव साक्षात् लक्ष्मीरासीत् उपमानपदेन उपमावाचकेन यथाशब्देन किम् उपमानपदप्रयोगो निरर्थक एवेत्यर्थः कष्टं बत अतोऽधिकं किं कष्टमस्ति सा तदानीं साक्षात् श्रीरूपा एषा दैववशेन विधिविपर्य्ययेण दुःखात्मकं दुःखमयं दुःखरूपेणोपादानेन निर्म्मितमिति यावत् अन्यदिव अन्यादृशं किमपि परिज्ञातुमशक्यं भूतं प्राणि जाता परिणता अहो विपाकः दशाविपर्य्यासः ।

(ख) पापः पापहेतुकः क्लेशकरो वा ।

---

(१) धर्म्मपत्नी । १ । २ । ४ ।
धर्म्मदाराः । ३ ।

(२) क एव । १ ।
क एवम् । २ । ४ ।
क एतत् । ३ ।

(३) अयमपरः प्रायः । १ ।
अयमपरप्रायः । २ ।
अयमपरः पापः । ३ । ४ ।

(४) ननु ब्रवीमि । १ । २ । ४
ननु भवतीभिः । ३ ।

इत्येष: व: कुलगुरोरादेश: (१) अतएवाहं प्रेषिता तत् कोऽयं पदे पदे महाननध्यवसाय: (२) (क) ।

कञ्चुकी । देवि "संस्तभ्यात्मानम्" अनुरुध्यस्व भगवतो वशिष्ठस्यादेशमिति विज्ञापयामि (ख) ।

कौशल्या । एरिसे काले मिहिलाधिदेवो (३) दट्ठव्वो त्ति समं एव्व सव्वदुक्खाइं (४) समुब्भवन्ति ण सक्कणोमि उग्घट्टमाण (५) मूलवन्धणं हिअअं अवत्थाविदुं (ग) ।

अरुन्धती । अत्र क: सन्देह: ।

सन्तानवाहीन्यपि मानुषाणां दु:खानि सद्बन्धुवियोगजानि ।
दृष्टे जने प्रेयसि दु:सहानि स्रोत:सहस्रैरिव संप्लवन्ते (घ) ॥

(क) अनध्यवसाय: अनुत्साह: वैदेहदर्शने प्रवृत्तिविरह इति यावत् ।

(ख) संस्तभ्य शोकं नियम्य स्थिरीकृत्य । अनुरुध्यस्व प्रतिपालय ।

(ग) ईदृशे काले मिथिलाधिदेव: द्रष्टव्य: इति समम् एव सर्व्वदु:खानि समुद्भवन्ति न शक्नोमि उद्घट्टमानमूलबन्धनं हृदयम् अवस्थापयितुम् ।

उद्घट्टमानमूलबन्धनम् - उद्घट्टमानानि श्लथीभवन्ति मूलबन्धनानि यस्य तत् दु:सहदु:खावेगवशेन मम हृदयबन्धनानि आमूलाद्विशीर्णानि भवन्तीत्यर्थ: ।

(घ) सन्तानवाहीनि - सन्तानेन अविच्छेदेन वहन्ति प्रवर्त्तन्ते यानि तानि धारावाहीणीत्यर्थ: । सद्बन्धुवियोगजानि - सत: सन्निहितस्य स्नेहास्पदस्येति यावत् बन्धो: सुहृद: वियोगात् विरहात् जायन्ते यानि तानि प्रियजनविरहनिबन्धनानीत्यर्थ: । संप्लवन्ते उच्छलन्ति अतिप्रबलानि भवन्तीत्यर्थ: ।

(१) वैदेह इत्येष व: कुलगुरोरादेश: । १ । २ । ४ ।
एष वैदेह इति व: कुलगुरोराज्ञा । ३ ।

(२) महानध्यवसाय: । १ । २ । ४ ।
महाननध्यवसाय: । ३ ।

(३) मिथिलाधिदेवो । १ । ३ । ४ ।
मिथिलाधिवो । २ ।

(४) सव्वाइं दुक्खाइं । १ । २ ।
सव्वदुक्खाइं । ३ । ४ ।

(५) उव्वत्तमाण । १ । २ । ४ ।
उग्घट्टमाण । ३ ।

कौशल्या । कहं वच्छाए वहूए एवं गदे तस्स राएसिणो मुहं दंसेम्ह (१) (क) ।

अरुन्धती ।

एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ (ख) ॥

कौशल्या । एसो सो महाराअस्स हिअआणन्दो वच्छाए वहूए पिदा राएसी। हद्धी हद्धी सम्भाविद म्हि अणुवत्थिद-(२) मह्सवे दिअहे । हा देव्व सव्वं एव्व तं णत्थि (ग) ।

जनकः । उपसृत्य । भगवत्यरुन्धति वैदेहः सीरध्वजोऽभिवादयते ।

(क) कथं वत्सायाः वध्वा एवं गते तस्य राजर्षेः मुखं दर्शयामः ।

एवं गते — एवम् इत्थं गते प्रवृत्ते सति ईदृश्यां दारुणायां दशायामुपस्थितायामित्यर्थः ।

(ख) जनकानां कुलोद्वहः— जनकानां जनकवंशीयानां नृपाणां कुलस्य वंशस्य उद्वहः धुरन्धरः । ब्रह्मपारायणं जगौ— ब्रह्मणो वेदस्य पारायणं पारगमनम् आदित आरभ्य अन्तं यावदध्ययनमिति यावत् जगौ उपदिदेश समग्र वेदमध्यापयामासेत्यर्थः ।

(ग) एषः सः महाराजस्य हृदयानन्दः वत्सायाः बध्वाः पिता राजर्षिः । हा धिक् हा धिक् सम्भाविता अस्मि अनुपस्थितमहोत्सवे दिवसे। हा दैव सर्व्वम् एव तत् नास्ति ।

महाराजस्य दशरथस्य। सम्भाविता समागता। अनुपस्थितमहोत्सवे दिवसे - अनुपस्थितः सीताविवासनात् विलयं गतः महोत्सवो यस्मिन् तादृशे दिवसे काले ।

(१) दंसइस्सं ।१।२। दंसेम्ह । ३ । ४ । (२) अणाहिद ।१।२।४। अणुवत्थिद ।३।

यया पूतम्मन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्व्वेषामपि खलु गुरूणां गुरुतमः।
त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् (क)॥

अरुन्धती। परं ज्योतिस्ते प्रकाशताम् अयं त्वां पुनातु देवः परोरजाः य एष तपति (ख)।

जनकः। आर्य्ये (१) दृष्टे अपि कुशलमस्याः प्रजापाल-मातुः (२) (ग)।

कञ्चुकी। स्वगतम् (३)। निरवशेषम् (४) अतिनिष्ठुरमुपा-

(क) ते तव पतिः वशिष्ठः पवित्रस्य महसः तेजसः निधिः आस्पदमपि पूर्व्वेषां पुरातनानां गुरूणां गुरुतमः प्रधानगुरुत्वेनाभिमतोऽपि यया भवत्या पूतम्मन्यः आत्मानं पूतं मन्यते त्रिलोकीमङ्गल्यां त्रिभुवनमङ्गलकारिणीं जगद्वन्द्यां सर्व्वलोकपूज्यां तां भगवतीम् उषसं प्रातःसन्ध्यां देवीमिव अवनितललोलेन भूतलनमितेन शिरसा मूर्द्ध्ना वन्दे प्रणमामि।

(ख) परं ज्योतिस्ते प्रकाशताम्— परं परमं ज्योतिः परब्रह्मरूपं तेजः ते तव प्रकाशताम् आविर्भवतु तव परमात्मज्ञानं सिद्ध्यत्वित्यर्थः। परोरजाः— रजसः परः रजःपारे प्रतिष्ठितः रजोगुणेनासंस्पृष्ट इत्यर्थः।

(ग) प्रजापालमातुः— प्रजाः पालयतीति प्रजापालो राजा रामः तस्य मातुः कौशल्यायाः राज्ञा रामेण प्रजारञ्जनानुरोधात् निरपराधामपि जानकीं परित्यजता अतिनृशंसमाचरितमिति द्योतयितुं प्रजापालमातुरित्याक्षेपोक्तिः।

(१) अयि। १। ३। ४।
आर्य्ये। २।

(२) प्रजापालस्य मातुः। १। २। ४।
प्रजापालमातुः। ३।

(३) कञ्चुकी। १। २। ४।
कञ्चुकी। स्वगतम्। ३।

(४) निर्व्विशेषम्। १। २।
निरवशेषम्। ३। ४।

लज्जाः स्मः । प्रकाशम् । राजर्षे (१) अनेनैव मन्युना चिर (२) परित्यक्तरामभद्रमुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखितां देवीम् । रामभद्रेणापि(३) समन्तात्(४) प्रवर्त्तित(५) बीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निशुद्धिमल्पकाः (६) प्रतियन्ति (७) इत्यतो दारुणमनुष्ठितम् (क) ।

जनकः । आः कोऽयमग्निर्नाम अस्मत्प्रसूतिपरिशोधने । कष्टम् एवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे ।

अरुन्धती । निश्वस्य(८) । एवमेतत् अग्निरिति वत्सां प्रति परिलघून्यक्षराणि सीतेत्येव पर्य्याप्तम् (ख) । हा वत्से

(क) निरवशेषं निःशेषं निरतिशयमिति यावत् । प्रवर्त्तितबीभत्सकिंवदन्तीकाः— प्रवर्त्तिता प्रचारिता बीभत्सा कुत्सिता किंवदन्ती लोकापवादो यैः ते तथोक्ताः । प्रवृत्तेति सार्व्वत्रिकः पाठः स च न समीचीन इति पाठान्तरं परिकल्पितम् । अल्पकाः क्षुद्राशयाः । प्रतियन्ति विश्वसति ।

(ख) वत्सां सीतां प्रति अग्निरिति परिलघूनि अकिञ्चित्कराणि अक्षराणि शुद्धिविषये सीतया तुलनायाम् अग्निर्नितरां परिहीयते अतस्तस्य सीतापरिशोधने शक्तिर्न सम्भवति । सीतेत्येव सीतेति शब्दमात्रं पर्य्याप्तं यथेष्टम् सीतेतिशब्दमात्रनिर्द्देशे शुद्धेः परिचयः पर्य्याप्तः स्यात् सीता हि मूर्त्तिमती शुद्धिः तथाविधायास्तस्याः अग्न्यादिभिः पावनान्तरैः परिशोधनप्रयासो निःसंशयस्तस्माद एवेत्यर्थः ।

(१) राजर्षे । १ । २ । ४ । प्रकाशम् । राजर्षे । ३ ।
(२) अचिर । १ । २ । चिर । ३ । ४ ।
(३) रामभद्रस्यापि दैवदुर्नियोगः कोऽपि यत् किल । १ । २ । ४ । रामभद्रेणापि । ३ ।
(४) समन्तात् ।१।२।४। समन्ततः ।३।
(५) प्रवृत्त । १ । २ । ३ । ४ ।
(६) अग्निपरिशुद्धिम् । १ । २ । ४ । अग्निशुद्धिम् । ३ ।
(७) प्रतिपद्यन्ते ।१।२।४। प्रतियन्ति ।३।
(८) अरुन्धती । १ । २ । ४ । अरुन्धती । निश्वस्य । ३ ।

शिशुर्वा शिष्या वा यदसि मम, तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं जनयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां (१)
गुणाः पूजास्थानं गुणिषु नच लिङ्गं नच वयः (क)

कौशल्या । अम्मो उम्मीलन्ति वेअणाओ (ख) ।

इति मूर्च्छति ।

जनकः । हा कष्टम् (२) किमेतत् ।

अरुन्धती । राजर्षे किमन्यत्

स राजा तत् सौख्यं स च शिशुजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम् ।
विपाके घोरेऽस्मिन् ननु (३) खलु विमूढा तव सखी
पुरन्ध्रीणां चेतः (४) कुसुमसुकुमारं हि भवति (ग) ॥

जनकः । हन्त हन्त सर्व्वथा नृशंसोऽस्मि संदृत्तः (५)

(क) उत्कर्षः अतिशयः । स्त्रैणं स्त्रीत्वम् । गुणाः पूजास्थानम्—गुणाः पूजायाः आदरस्य स्थानम् आस्पदम् गुणाः पूजाप्रवर्त्तका इत्यर्थः । लिङ्गं स्त्रीत्वपुंस्त्वादिकम् ।

(ख) अम्मो उन्मीलन्ति वेदनाः ।

उन्मीलन्ति प्रादुर्भवन्ति प्रबलीभवन्ति वा ।

(ग) शिशुजनः रामादिः सीतादिश्च । विपाके दशाविपर्य्यासे । घोरे दारुणे दुःसहे इति यावत् । विमूढा विगतचेतना ।

(१) जगतः ।१।२।४। जगताम् । ३ ।
(२) हा कष्टम् । १ । २ । ३ । हा । ४ ।
(३) अथ । १ । २ । ४ । ननु । ३ ।
(४) चेतः । १ ।३ । ४ । चित्तम् । २ ।
(५) कष्टं कष्टम् सर्व्वथा नृशंसोऽस्मि । १ । २ । ४ । हन्त हन्त सर्व्वथा नृशंसोऽस्मि संवृत्तः । ३ ।

यस्मिन्नस्य दृष्टान् प्रियसुहृदः प्रियान् दारान् (१) न स्निग्धं पश्यामि (क) ।

स सम्बन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं
सचानन्दः साक्षादपिच निखिलं जीवितफलम्(२) ।
शरीरं जीवो वा यदधिकमतो वा प्रियतमो (३)
महाराजः श्रीमान् किमिव मम नासीद्दशरथः (ख) ॥

कष्टम् इयमेव सा कौशल्या ।

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत् स्मृत्वा दहति यदवस्कान्द्य हृदयम् (ग) ॥

(क) प्रियसुहृदः प्रियान् दारान्— प्रियसुहृदः प्रियबन्धोर्दशरथस्य प्रियान् दारान् प्रियां पत्नीं कौशल्याम् । स्निग्धम् सस्नेहम् ।

(ख) स दशरथः श्लाघ्यः स्पृहणीयः सम्बन्धी आसीत् असौ दशरथः प्रियसुहृत् प्रियः सखा आसीत् तत् दशरथरूपं हृदयम् दशरथो मम हृदयमासीदित्यर्थः स दशरथः मम साक्षात् मूर्त्तिमान् आनन्द आसीत् अपिच किञ्च स दशरथः मम निखिलं समग्रं जीवितस्य जीवनधारणस्य फलम् आसीत् शरीरं देहः जीवः प्राणाः वा अथवा अतः आभ्यां शरीरजीवाभ्यां यत् किमपि अधिकं दशरथः मम तत् सर्व्वमासीदित्यर्थः अतः प्रियतमः प्रियश्रेष्ठः श्रीमान् महाराजः दशरथः मम किमिव नासीत् ।

(ग) अस्याः कौशल्यायाः वा अथवा पत्युः दशरथस्य रहसि विजने परमं निरतिशयं यत् दूषितं दोषः प्रणयापराध इति यावत् अभूत् तत्र अहं दम्पत्योः

---

(१) प्रियदारान् । १।२।४ ।  जीवितपद्मम् । २ ।
प्रियान् दारान् । ३ ।  (३) प्रियतरः । १ । ४ । प्रियतरम् । २ ।
(२) जीवितफलम् । १ । ३ । ४ ।  प्रियतमः । ३ ।

अरुन्धती। हा कष्टम् चिर (१) निरुद्धनिश्वासनिष्ठुरं हृदयमस्याः (क)।

जनकः। हा प्रियसखि।

इति कमण्डलुजलेन (२) सिञ्चति।

कञ्चुकी।

सुहृदिव प्रकटय्य सुखप्रदः (३)
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो
विधिरहो विभिनष्टि मनोरुजम् (४) (ख)॥

जायापत्योः कौशल्यायाः दशरथस्य वा इत्यर्थः पृथक् उपालम्भस्य भर्त्सनस्य तव प्रियसुहृदेवमाचरितवान् वा तव प्रियसखी एवमाचरितवती नाहमेतत् सहिष्ये यथा पुनरप्येवं नाचरति तथा त्वया कर्त्तव्यमित्येवंरूपस्य विषयः आस्पदम् अभूवम् ममैवासावपराध इति मत्वा अहमेव तेन तया वा भर्त्सितोऽभूवमित्यर्थः तदनु तत्पश्चात् प्रसादे कोपे वा विधिः व्यापारः मदधीनः अभूत् तौ प्रसादयितुं कोपयितुं वा अहमेव समर्थोऽभूवमित्यर्थः वा अथवा तत् पूर्व्ववृत्तं स्मृत्वा अलम् यत् यतः तत् पूर्व्ववृत्तं हृदयम् अवस्कन्द्य आक्रम्य दहति अत्यर्थं सन्तापयति।

(क) चिरनिरुद्धनिश्वासनिष्ठुरम्— चिरं दीर्घकालं निरुद्धेन स्तम्भितेन निश्वासेन निश्वासनिरोधेनेत्यर्थः निष्ठुरं निश्चलम्।

(ख) विधिः दैवं प्रथमं पूर्व्वम् सुखप्रदः सुखदायी सुहृदिव एकरसां रसान्तरेणासंसृष्टाम् अनुकूलताम् प्रकटय्य दर्शयित्वा अहो आश्चर्यं पुनः अनन्तरम् अकाण्डेन अतर्कितेन विवर्त्तनेन रूपान्तरपरिग्रहेण दारुणः नृशंसः सन् मनोरुजं मानसीं व्यथां विभिनष्टि विशेषेण वर्द्धयति दैवस्य गतिर्दुर्लक्ष्यैति भावः।

(१) अतिचिर।१।२।४। चिर।३।
(२) कमण्डलूदकेन।१।२।४। कमण्डलुजलेन।३।
(३) सुखप्रदः।१।३।४। सुखप्रदाम्।२।
(४) प्रविभिनष्टि विधिर्मनसोरुजम्।१।२।४। विधिरहो विभिनष्टि मनोरुजम्।३।

कौशल्या । संज्ञां लब्ध्वा । हा वच्छे जाणइ कहिं, सि सुमरामि दे विआहलच्छीपरिग्गहेक्कमण्डणं (१) पप्फुरन्तसुद्धविहसिदं मुद्धमुहपुण्डरीअं(२)आप्फुरन्तचन्दचन्दिआसुन्दरेहिं(३) अङ्गेहिं पुणो वि मे जादे उज्जोएहि उच्छङ्गं(४) सव्वदा महाराओ भणादि एसा रहुउलमहत्तराणं वहू अम्हाणं उण (५) जणअसम्बन्धेण दुहिदिआ एव्व (क) ।

(क) हा वत्से जानकि कुत्र असि स्मरामि ते विवाहलक्ष्मीपरिग्रहैकमण्डनं प्रस्फुरच्छुद्धविहसितं मुग्धमुखपुण्डरीकम् आस्फुरच्चन्द्रचन्द्रिकासुन्दरैः अङ्गैः पुनः अपि मे जाते उद्द्योतय उत्सङ्गम् सर्व्वदा महाराजः भणति एषा रघुकुलमहत्तराणां बधूः अस्माकं पुनः जनकसम्बन्धेन दुहिता एव ।

विवाहलक्ष्मीपरिग्रहैकमण्डनम्— विवाहलक्ष्म्याः अभिनवविवाहजनितायाः शोभायाः परिग्रहः धारणम् एकं मुख्यं मण्डनं भूषणं यस्य तत् तथोक्तम् । प्रस्फुरच्छुद्धविहसितम्— प्रस्फुरत् विलसत् शुद्धं निर्म्मलं विहसितं हास्यं यस्मिन् तत् तथोक्तम् । आस्फुरच्चन्द्रचन्द्रिकासुन्दरैः— आस्फुरतः सविशेषं विकाशमानस्य चन्द्रस्य चन्द्रिका ज्योत्स्ना तद्वत् सुन्दरैः शोभमानैः । रघुकुलमहत्तराणां बधूः— रघुकुलस्य रघुवंशस्य महत्तराणाम् अतिमहतां पूर्व्वेषां रघुवंश्यानां बधूः ते एनां बधूं मन्यन्तामित्यर्थः ।

(१) मङ्गलं । १ । ४ । मण्डणं । २ । ३ ।

(२) पप्फुरन्तअनुवद्धहसिदसुद्धमुहपुण्डरीअं । १ । ४ ।

पप्फुरन्तसुद्धहसिदसुद्धमुहपुण्डरीअं । २ ।

पप्फुरन्तसुद्धविहसिदं सुद्धमुहपुण्डरीअं । ३ ।

(३) आप्फुरन्तकौमुदीचन्दचन्दिआसुन्दरेहिं । १ । २ । ४ ।

आप्फुरन्तचन्दचन्दिआसुन्दरेहिं । ३

(४) अङ्गेहिं उल्लासेहि जादे पुणोवि उज्जोएहि उच्छङ्गं । १ । २ । ४ ।

अङ्गेहिं पुणोवि मे जादे उज्जोएहि उच्छङ्गं । ३ ।

(५) अम्हाणं व । १ ।

अम्हाणं उण । २ । ३ ।

कञ्चुकी। यथाह (१) देवी।

पञ्चप्रसूतेरपि राज्ञ आसीत्
प्रियो विशेषेण सुबाहुशत्रुः।
वधूचतुष्केऽपि यथाहि(२) शान्ता
प्रिया तनूजास्य तथैव सीता (क)॥

जनकः। हा प्रियसख महाराज दशरथ एवमसि सर्व्व-प्रकारहृदयङ्गमः कथं विस्मर्य्यसे।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि।
त्वं कालेन तथाविधोऽस्यपहृतः (३) सम्बन्धबीजञ्च(४) तद्
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग्जीवितम्(ख)॥

जनकसम्बन्धेन दुहिता— प्रणयातिरेकेण जनकस्य सोदराविशेषात् तत्-कन्याया दुहितृत्वमेव युज्यते।

(क) पञ्चप्रसूतेः— पञ्च प्रसूतयः अपत्यानि यस्य सः तस्य एका कन्या शान्ता चत्वारः पुत्त्रा रामादय इति दशरथस्य पञ्चापत्यानि। सुबाहुशत्रुः— सुबाहुर्नाम वारणानुचरो राक्षसविशेषः तस्य शत्रुर्निधनकारी रामः।

(ख) आप्तम् आत्मीयम्। आराधनम् पूजनं सत्कार इति यावत्। सम्बन्धबीजञ्च तत्— तत् सीतारूपं सम्बन्धबीजं रघुकुलनिमिकुलयोर्वैवाहिक-सम्बन्धस्य बीजं निदानम् अपहृतमिति शेषः। जीवलोकनरके— जीवानां प्राणिनां लोकः जीवलोकः संसारः तद्रूपे नरके यातनाभोगस्थाने।

(१) यथाह।१।२। यदाह।३। तथाविधोऽसि।३।
(२) यथैव।१।२। यथाहि।३। (४) सम्बन्धबीजन्तु।१।२।
(३) तथाविधोऽपि।१।२। सम्बन्धबीजञ्च।३।

कौशल्या । जादे जाणइ किं करेमि दढवज्जलेवघडिअ-वन्धणिच्चलं (१) हदजीविदं मं मन्दभाइणिं ण परिच्चअइ (क) ।

अरुन्धती । आश्वसिहि (२) राजपुत्रि, बाष्पविश्रामोऽप्यन्तरे (३) कर्त्तव्य एव । अन्यच्च किं न स्मरसि यदवोचदृष्य-शृङ्गाश्रमे युष्माकं कुलगुरुः तदुपजातमेव (४) किन्तु कल्याणोदर्कं भविष्यति (ख) ।

कौशल्या । भअवदि अदिक्कन्तो मणोरहो (ग) ।

अरुन्धती । तत् किं मन्यसे राजपुत्रि मृषोद्यं तदिति (घ) नहीदं सुक्षत्रियेऽन्यथा मन्तव्यम्, भवितव्यमेव तेन ।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत् ।

(क) जाते जानकि किं करोमि दृढवज्रलेपघटितबन्धनिश्चलं हतजीवितं मां मन्दभागिनीं न परित्यजति ।

दृढवज्रलेपघटितबन्धनिश्चलम्— दृढेन दुर्भेद्येन वज्रलेपेन वज्रबन्धनेन घटितः योजितः सम्पादित इति यावत् बन्धो बन्धनं यस्य तत् तथोक्तम् अत एव निश्चलं स्थिरम् ।

(ख) कुलगुरुः कुलपुरोहितः वशिष्ठः । कल्याणोदर्कम्— कल्याणः शुभः उदर्कः भावि फलं यस्य तत् शुभपरिणाममित्यर्थः ।

(ग) भगवति अतिक्रान्तः मनोरथः ।

मनोरथविज्ञिसम्भावना नास्तीत्यर्थः ।

(घ) मृषोद्यम् मिथ्याकथनं निष्फलं वाक्यमिति यावत् ।

(१) णिच्चलं व्वेव । १ । २ ।
णिच्चलं । ३ ।

(२) आश्वसिहि । १ । २ ।
समाश्वसिहि समाश्वसिहि । ३ ।

(३) अन्तराले ।१।२। अन्तरे ।३।

(४) तथेत्युपजातमेव । १ ।
तदुपजातमेव । २ ।
तत्तथेत्युपजातमेव । ३ ।

भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता (१)
नैते वाचं विप्लुतां व्याहरन्ति(क) ॥

नेपथ्ये

कलकलः ।

सर्व्वे आकर्णयन्ति ।

जनकः । अद्य शिष्टानध्याय इति (२) उद्धतं खेलतां (३) वटूनां कलकलः (ख) ।

कौशल्या । सुलहसोक्खं दाव (४) वालत्तणं होदि । निरूप्य । अम्महे, एदाणं मज्झे को एसो रामभद्दलच्छीपरिसोहिदेहिं (५) सावट्ठम्भमुद्धललिदेहिं अङ्गेहिं अम्हाणं लोअणाइं (६) सीदलावेदि (ग) ।

(क) आविर्भूतं बुद्धिवृत्तौ स्फुरितं ज्योतिः ब्रह्मतत्त्वरूपं येषां साक्षात्कृतपरमब्रह्मरूपज्योतिःपदार्थानामित्यर्थः ब्राह्मणानाम् ऋषीणां ये व्याहाराः उक्तयः तेषु संशयो मा भूत् तेषां निष्फलत्वं मा शङ्किष्ठाः एषां ब्राह्मणानां हि वाचि उक्तौ भद्रा शुभा अव्याहता इति यावत् लक्ष्मीः सिद्धिः निषक्ता नित्यानुगता एते ब्राह्मणाः विप्लुतां व्याहतार्थां विफलामिति यावत् वाचं न व्याहरन्ति उच्चारयन्ति ।

(ख) शिष्टानध्यायः— शिष्टानां सदाचारानुवर्त्तिनाम् अनध्यायः वेदाध्ययनवर्जनम् । उद्धतम् अनियन्त्रितम् उच्छृङ्खलमिति यावत् ।

(ग) सुलभसौख्यं तावत् बालत्वं भवति । अम्महे, एतेषां मध्ये कः एषः रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भमुग्धललितैः अङ्गैः अस्माकं लोचनानि शीतलयति ।

---

(१) नियुक्ता । १ । ३ । निषक्ता । २ ।

(२) शिष्टानध्याय इति । १ । २ ।
शिष्टानध्ययनमिति । ३ ।

(३) खेलताम् ।१।३। उद्धतं खेलताम् ।२।

(४) दाणीं । १ । दाव । २ । ३ ।

(५) सरिसेहिं ।१।२। परिसोहिदेहिं ।३।

(६) अम्हाणं वि लोअणाइं । १ । २ ।
अम्हाणं मणो । ३ ।

अरुन्धती । अपवार्य्य सहर्षवाष्पम् (१) । इदं नाम तत् भागीरथीनिवेदितरहस्यं कर्णामृतम् नत्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति (क) ।

जनकः ।

कुवलयदलस्निग्धश्यामः (२) शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियेव (३) सभाजयन् ।
पुनरिव शिशुर्भूतो (४) वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् (ख) ॥

सुलभसौख्यम्— सुलभम् अनायासलभ्यं सौख्यं सुखसन्तानो यस्मिन् तत् तथोक्तम् बाल्ये हि चिन्तोद्वेगादिकारणविरहात् शिशवः सदा सुखेन कालमतिवाहयन्तीत्यर्थः । रामभद्रलक्ष्मीपरिशोभितैः— रामभद्रस्य लक्ष्म्या श्रिया परिशोभितैः अलङ्कृतैः रामभद्रस्य शरीरकान्तिरस्मिन् संक्रमितेव लक्ष्यते इत्यर्थः । सावष्टम्भमुग्धललितैः— अवष्टम्भः सौष्ठवं तत्सहितैः सौष्ठवपूर्णैः सुघटितैरिति यावत् मुग्धैः मनोहारिभिः ललितैः मार्द्दवपूर्णैः ।

(क) भागीरथीनिवेदितरहस्यं कर्णामृतम्— भागीरथ्या निवेदितं कीर्त्तितं रहस्यं गुह्यं यस्य तत् तथोक्तं कर्णामृतं कर्णयोर्निरतिशयसुखसाधनं कुशलवयोर्जन्मवृत्तान्तं श्रुत्वा अरुन्धत्याः कर्णौ चरितार्थौबभूतामित्यर्थः । तया सीतातनयवृत्तान्तः पूर्व्वं भागीरथीमुखादुपश्रुत आसीत् तत एव लवं दृष्ट्वा सीतातनययोरन्यतरोऽयमिति परिज्ञातम् ।

(ख) कुवलयदलवत् नीलोत्पलपत्रवत् स्निग्धः कोमलः श्यामश्च शिखण्डकमण्डनः काकपक्षभूषणः पुण्यश्रीकः निर्म्मलकान्तिः श्रिया देहशोभया वटूनां परिषदं समाजं सभाजयन् अलङ्कुर्व्वन्निव पुनः शिशुर्भूतः शैशवमापन्नः स

(१) अपवार्य्य सहर्षवाष्पम् । १ । २ । सहर्षोत्कण्ठं स्वगतम् । २ ।
(२) श्यामस्निग्धः । १ । २ । स्निग्धश्यामः । ३ ।
(३) श्रियैव । १ । २ । श्रियेव । ३ ।
(४) शिशुर्भूत्वा । १ । २ । ३ ।

कञ्चुकी। क्षत्त्रियब्रह्मचारी (१) दारकोऽयमिति मन्ये।

जनकः। एवमेतत् (२) तथाहि

चूडाचुम्बितकङ्कपत्त्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोम (३) पवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकं
पाणौ कार्म्मुकमक्षसूत्रवलयं दण्डं तथा पैप्पलम्(४) (क)॥

भगवत्यरुन्धति किमुत्प्रेक्षसे कुतस्त्योऽयमिति (ख)।

भो वत्सः रघुनन्दन इव अयं कः दृष्टः ननु झटिति दर्शनमात्रेणैव दृशोः नयनयोः अमृताञ्जनम् अमृतमयमञ्जनं तादृशाञ्जनकार्य्यमिति यावत् कुरुते। शिशुर्भूत इत्यत्र शिशुर्भूत्वेति पाठो लिपिकरप्रमादमूलक इति प्रतिभाति।

(क) अयं पृष्ठतः पृष्ठदेशे अभितः उभयतः पृष्ठस्योभययोः पार्श्वयोरित्यर्थः चूडाभिः शिखाभिः चुम्बितानि संस्पृष्टानि कङ्कस्य पक्षिविशेषस्य पत्त्राणि वाणपुङ्खवर्त्तिनः पक्षाः यस्य तत् तादृशं तूणीद्वयम् इषुधियुगलम् भस्मनां स्तोमः समूहः पवित्रं लाञ्छनं चिह्नं यस्य तत् भस्मलिप्तमित्यर्थः तादृशम् उरः वक्षः रुरुर्मृगविशेषः तदीयां त्वचम् मूर्व्वा लताविशेषः तत्तन्तुनिर्म्मितया मेखलया कटिसूत्रेण नियन्त्रितं संयमितं माञ्जिष्ठिकं मञ्जिष्ठारागरञ्जितम् अधोवासः परिधानञ्च पाणौ हस्ते कार्म्मुकं शरासनम् अक्षसूत्रवलयं वलयाकारम् अक्षसूत्रं जपमालाम् तथा पिप्पलोऽश्वत्थः तच्छाखानिर्म्मितं दण्डं धत्ते धारयति एतानि क्षत्त्रियब्रह्मचारिलक्षणानीत्यर्थः।

(ख) अयं दारकः कुतस्त्यः कुत आगतः कस्यायमङ्गात् प्रसूतः इति यावत् इति अस्मिन् विषये किम् उत्प्रेक्षसे तर्कयसि।

(१) नूनं क्षत्त्रियब्रह्मचारी। १। २। क्षत्त्रियब्रह्मचारी। ३।

(२) एवमेव। १। २। एवमेतत्। ३।

(३) स्तोक। १। २। स्तोम। ३।

(४) दण्डोऽपरः पैप्पलः। १। २। दण्डं तथा पैप्पलम्। ३।

अरुन्धती । अद्यैवागता वयम् (१) (क) ।

जनकः । आर्य्य (२) दृष्टे अतीव मे कौतुकं वर्त्तते तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ इमम् दारकं (३) ब्रूहि केऽप्येते प्रवयसस्त्वां दिदृक्षव इति ।

कञ्चुकी । यथाज्ञापयसि (४) ।

इति निष्क्रान्तः ।

कौशल्या । किं भणध एवं भणिदो आगमिस्सदि त्ति (ख) ।

अरुन्धती । भिद्येत वा(५) सद्वृत्तमीदृशस्य निर्म्माणस्य(ग) ।

कौशल्या । निरूप्य (६) । कधं सविणअं (७) णिसामिद गिट्ठिवअणो विसज्जिदइसिदारओ इदोऽहिमुहं पसरिदो (८) एव्व सो वच्छो (घ) ।

जनकः । चिरं निर्वर्ण्य । भोः किमप्येतत्

(क) अद्यैवागता वयम्— वयम् अद्य एव आगता वाल्मीकेराश्रमपदे इति शेषः नवागतत्वादतत्वृत्तान्तानभिज्ञतया कस्यायं दारक इति तर्कयितुं भवानिव वयमप्यसमर्था एवेत्यर्थः ।

(ख) किं भणथ एवं भणितः आगमिष्यति इति ।

(ग) ईदृशस्य लोकातिगरूपसम्पन्नस्य निर्म्माणस्य विधातृनिर्म्मितस्याकारस्य तादृशाकारसम्पन्नस्येत्यर्थः सत् साधु वृत्तं चरितं भिद्येत वा अन्यथा भवेत् किम् न कदापीत्यर्थः ।

(घ) कथं सविनयं निशामितशिष्टवचनः विसृष्टर्षिदारकः इतोऽभिमुखं प्रसृतः एव सः वत्सः ।

(१) अद्यैव वयमप्यागताः । १ । २ । अद्यैवागता वयम् । ३ ।
(२) आर्य्य । १ । २ । अयि । ३ ।
(३) बालकम् । १।२। दारकम् । ३ ।
(४) यदाज्ञापयसि । १ । २ । यथाज्ञापयसि । ३ ।
(५) वा । १ । ३ । किम् । २ ।
(६) विचिन्त्य । १ । निरूप्य । २ । ३ ।
(७) सविणअं । १ । २ । सविणअ । ३ ।
(८) पसरिदो ।१।२। पदाअदो । ३ ।

महिम्नामेतस्मिन् विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो (१) न पुनरविदग्धैरतिशयः ।
मनो मे सम्मोदः स्थिरमपि (२) हरत्येव (३) बलवा-
नयोधातुं यद्वत् परिलघुरयस्कान्तशकलः (क) ॥

प्रविश्य(४)

लवः (५) । अज्ञातनामक्रमाभिजनान् (६) पूज्यानपि नः स्वतः कथमभिवादयिष्ये । विचिन्त्य । अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । सविनयमुपसृत्य । एष वो लवस्य मूर्द्धा प्रणामपर्य्यायः (७) (ख) ।

अरुन्धतीजनकौ । कल्याणिन्नायुष्मान् भूयाः ।

(क) एतस्मिन् दारके विनयेन नम्रतया शिशुतया शैशवेन मौग्ध्येन आर्जवेन मसृणः कोमलः महिम्नां तेजसाम् अतिशयः उत्कर्षः विदग्धैः सूक्ष्मग्रहणकोविदैः निर्ग्राह्यः अवबोद्धुं शक्यः न पुनः अविदग्धैः सूक्ष्मग्रहणासमर्थैः। बलवान् प्रबलः सम्मोदः एतद्दर्शनजनित आनन्दातिशयः स्थिरम् निश्चलं विषयैरनाकृष्टमिति यावत् मे मनः परिलघुः स्वल्पप्रमाणः अयस्कान्तस्य मणिविशेषस्य शकलः खण्डः अयोधातुं यद्वत् लौहधातुमिव हरति आकर्षत्येव। सम्मोह इतिपाठस्तु लिपिकरप्रमादमूलक इति प्रतिभाति।

(ख) अज्ञातनामक्रमाभिजनान्— अज्ञाताः अविदिताः नामक्रमाभिजनाः येषां ते तान् क्रमः अभ्यर्हितत्वनिबन्धनमभिवादनपौर्व्वापर्य्यम् अभिजनः कुलम्। स्वतः स्वयं स्वबुद्धिमाश्रित्येति यावत्। प्रणामपर्य्यायः प्रणामपरम्परा ।

---

(१) निर्ग्राह्यः ।१।२। दुर्ग्राह्यः । ३ ।
(२) सम्मोहः स्थिरमपि । १ । २ । सम्मोहस्थिरमपि । ३ ।
(३) हरत्येव । १ । २ । हरत्येषः । ३ ।
(४) प्रविश्य । १ । २ । ततः प्रविशति लवः । ३ ।
(५) लवः । स्वगतम् ।१।२। लवः । ३ ।
(६) अज्ञातनामक्रमाभिजनान् ।१।२। अज्ञातनामक्रमाभिजात्यान् । ३ ।
(७) एष वो लवस्य शिरसा प्रणामपर्य्यायः । १ । एष वो लवस्य प्रणामपर्य्यायः । २ । एष वो लवस्य मूर्द्धा प्रणामपर्य्यायः।३

कौशल्या । जाद चिरं जीव (१) (क) ।

अरुन्धती । एहि वत्स (२) । लवमुत्सङ्गे कृत्वा । अपवार्य्य(३) । दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि (४) मे सम्पूर्णः ।

कौशल्या । जाद इदो वि दाव एहि । क्रोडे (५) कृत्वा । अम्महे ण केअलं दरविअसन्तणीलुप्पलसामलुज्जलेण (६) देहबन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाददीहरदीहरेण (७) सरेण अ (८) रामभद्दस्स (९) अणुहरदि । णं कठोर(१०) कमलगब्भपम्हलो(११) सरीरप्फंसो वि तारिसो एव्व वच्छस्स । जीव जाद (१२) पेक्खस्सिं दाव दे मुहचन्दं(१३) । चिबुकमुन्नमय्य निरूप्य च सबाष्पाकूतम् । राएसि किं ण पेक्खसि णिउणं णिरूविज्जमाणं से मुहं वच्छाए वहूए मुहचन्देण संवददि एव्व (ख) ।

(क) जात चिरं जीव ।

(ख) जात इतः अपि तावत् एहि । अम्महे न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण च रामभद्रम् अनुहरते । ननु कठोरकमलगर्भकोमलः शरीरस्पर्शः अपि तादृशः एव वत्सस्य । जीव जात प्रेक्षे तावत् ते मुखचन्द्रम् ।

(१) ताद चिरं मे जीअ । १ ।
ताद मे चिरं जीव । २ ।
जाद चिरं जीव । ३ ।
(२) एहि वत्स ।१।२। एहि मे वत्स ।३।
(३) अपवार्य्य । १ । ३ । स्वगतम् । २ ।
(४) मनोरथः ।१।२। मनोरथोऽपि ।३।
(५) उत्सङ्गे । १ । २ । क्रोडे । ३ ।
(६) सामलुस्सदेण । १ । २ ।
सामलुज्जलेण । ३ ।
(७) कलहंसणिग्घोसघग्घरणिणाद ।१।२।
कलहंसणिणाद । ३ ।
(८) सरेण अ । १ । २ ।
सरसञ्जोएण अ । ३ ।
(९) रामभद्दं ।१।२। रामभद्दस्स । ३ ।
(१०) कढिण । १ । २ । कठोर । ३ ।
(११) पम्हलो । १ । २ । पक्खलो । २ ।
(१२) जाद । १ । २ । जीव जाद । ३ ।
(१३) मुहं । १ । २ । मुहचन्दं । ३ ।

जनकः । पश्यामि सखि (१) ।

कौशल्या । अम्मो उम्मत्तीभूदं विश्च मे हिअअं किं वि चिन्तअन्तो बहु विप्पलवदि (२) (क) ।

जनकः (३) ।

वत्सायास्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पूर्णप्रतिबिम्बतेव (४) निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैव किमुत्पथैर्मम मनः पारिप्लवं धावति (ख) ॥

राजर्षे किं न प्रेक्षसे निपुणं निरूप्यमाणम् अस्य मुखं वत्सायाः बध्वाः मुखचन्द्रेण संवदति एव ।

कषायकण्ठः रक्तकण्ठः मधुरकण्ठ इति यावत् । दीर्घदीर्घेण अतिदीर्घेण । अनुहरते अनुकरोति । कठोरकमलगर्भकोमलः— कठोरं पूर्णं प्रस्फुटितमिति यावत् यत् कमलं तस्य गर्भः अभ्यन्तरभागः तद्वत् कोमलः । संवदति सौसादृश्यं व्यनक्ति ।

(क) अम्मो उन्मत्तीभूतम् इव मे हृदयम् किम् अपि चिन्तयत् बहु विप्रलपति ।

अस्य दर्शनेन उन्मत्तीभूतं सत् मम हृदयं किमपि चिन्तयत् विभावयत् बहु अनेकधा विप्रलपति असम्बद्धं प्रलपति सीतायास्तनयोऽयमित्यादिकं मां प्रत्याययितुं यतते इत्यर्थः ।

(ख) अस्मिन् शिशौ वत्सायाः सीतायाः रघूद्वहस्य रघुकुलधुरन्धरस्य रामस्य च सम्पूर्णः प्रतिबिम्बः दर्पणादाविव छायापातः यस्मिन् सः तस्य भावः सम्पूर्णप्रतिबिम्बता सा इव अभिव्यज्यते लक्ष्यते शिशावस्मिन् वत्सयो-

(१) पश्यामि सखि पश्यामि । १ । २ । पश्यामि सखि । ३ ।

(२) किं पि एतोमुहं विप्पलवदि । १ । किंपि एदस्स मुहं विप्पलहदि । २ । किंपि चिन्तअन्तो बहु विप्पलवदि । ३ ।

(३) जनकः । निरूप्य । १ । २ । जनकः । ३ ।

(४) सम्पूर्णं प्रतिबिम्बितेव । १ । २ । सम्पूर्णप्रतिबिम्बतेव । ३ ।

कौशल्या । जाद अत्थि दे मादा (१) सुमरसि वा तादं (क) ।

लवः । नहि (२) ।

कौशल्या । तदो कस्स तुमं (ख) ।

लवः । भगवतो वाल्मीकेः ।

कौशल्या । अइ जाद कधिदव्वं कधेहि (३) (ग) ।

लवः । एतदेव जानामि ।

## नेपथ्ये

भोः भोः सैनिकाः एष खलु कुमारचन्द्रकेतुराज्ञापयति न केनचिदाश्रमाभ्यर्णभूमिराक्रमितव्येति ।

अरुन्धतीजनकौ । अये मेध्याश्वरक्षाप्रसङ्गादुपागतो (४) वत्सश्चन्द्रकेतुरद्य द्रष्टव्यः अहो सुदिवसः (५) ।

रेतादृशं सौसादृश्यं यदयं तयोः प्रतिविम्ब इव प्रतिभाति सौसादृश्यमेव दर्शयति निखिला समग्रा सैव आकृतिः सा द्युतिः कान्तिः सा वाणी वाक् स एव विनयः सहजः स्वाभाविकः असौ पुण्यः पवित्रः अनुभावः प्रभावोऽपि एतत् सर्वं प्रतिविम्बाटन्यत्र न सम्भवतीति भावः अथवा दुराशया विप्रलब्धोऽहमेवं तर्कयामीत्याह हा हा दैव मम मनः पारिप्लवं चञ्चलं सत् उत्पथैः विपरीतपथैः किं कथं धावति ।

(क) जात अस्ति ते माता स्मरसि वा तातम् ।

(ख) ततः कस्य त्वम् ।

(ग) अयि जात कथयितव्यं कथय ।

(१) अत्थि दे मादा । १ । २ ।
जाद अत्थि दे मादा । ३ ।

(२) नहि नहि । १ । २ । नहि । ३ ।

(३) अइ जाद कधिदव्वं कधेहि । १ । २ ।
जाद कधिदव्वं ता कधेहि । ३ ।

(४) रक्षाप्रसङ्गादुपागतः । १ । २ ।
रक्षापदेशाद्वागतः । ३ ।

(५) इत्यहो सुदिवसः । १ । २ ।
अहो सुदिवसः । ३ ।

कौशल्या । वच्छलक्खणस्स पुत्तओ आणवेदि त्ति अमिअ-विन्दुसुन्दराइं अक्खराइं सुणीअन्ति (क) ।

लवः । आर्य्य क एष चन्द्रकेतुर्नाम ।

जनकः । जानासि रामलक्ष्मणौ दाशरथी ।

लवः । तावेव (१) रामायणकथापुरुषौ ।

जनकः । तत् कथं न जानासि तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः (२) ।

लवः । ऊर्म्मिलापुत्त्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

अरुन्धती । विहस्य । आविष्कृतं कथाप्रावीण्यं कुमारेण (३) (ख) ।

जनकः (४) । यदि त्वमीदृशः कथायामभिज्ञः तद् ब्रूहि तावत् पृच्छामः तेषां दशरथात्मजानां किन्नामधेयान्यपत्यानि केषु (५) दारेषु प्रसूतानि ।

लवः । नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्व्वः ।

जनकः । किं न प्रणीतः (६) कविना ।

(क) वत्सलक्ष्मणस्य पुत्त्रकः आज्ञापयति इति अमृतविन्दुसुन्दराणि अक्षराणि श्रूयन्ते ।

(ख) कथाप्रावीण्यम्— कथायाम् आख्याने प्रावीण्यम् अभिज्ञत्वम् ।

---

(१) एतावेव । १ । २ । तावेव । ३ ।

(२) जनकः । अथ किम् ।

लवः । तौ कथं न जानामि ।

जनकः । तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः । १ । २ ।

जनकः । तत् कथं न जानासि तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः । ३ ।

(३) वत्सेन । १ । २ । कुमारेण । ३ ।

(४) जनकः । विचिन्त्य । १ । २ ।

जनकः । ३ ।

(५) केषु । १ । ३ । केषु केषु । २ ।

(६) प्रणीत एव । १ । २ । प्रणीतः । ३ ।

लवः । प्रणीतो न (१) प्रकाशितः । तस्यैव (२) कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः तच्च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्य्यत्रिकसूत्रकारस्य (क) ।

जनकः । किमर्थम् ।

लवः । स किल भगवान् (३) तमप्सरोभिः प्रयोजयिष्यतीति (४) ।

जनकः । सर्व्वमिदमस्माकमाकूतकरम् (५) (ख) ।

लवः । महती पुनस्तस्मिन् (६) भगवतो वाल्मीकेरास्था । केषाञ्चिदन्तेवासिनां (७) हस्तेन तत् पुस्तकं भरताश्रमं (८) प्रेषितम् तेषामानुयात्रिकश्चापपाणिः प्रमादापनोदनार्थम् (९) अस्मद्भ्राता प्रेषितः (ग) ।

(क) सन्दर्भान्तरेण अन्येन प्रबन्धेन दृश्यकाव्यरूपेण । अभिनेयार्थः—अभिनेयः अभिनयेन प्रयोज्यः अर्थः इतिवृत्तरूपं वस्तु यस्य सः तथोक्तः । तौर्य्यत्रिकसूत्रकारस्य— तौर्य्यत्रिकं नृत्यगीतवाद्यात्मकं नाट्यशास्त्रं तत्सूत्रकारस्य तत्प्रथमप्रवर्त्तकस्य ।

(ख) आकूतकरम् कौतूहलोद्बोधकम् ।

(ग) आनुयात्रिकः अनुचरः । प्रमादापनोदनार्थम् सम्भाव्यमानविघ्ननिराकरणार्थम् ।

---

(१) नतु । १ । २ । , न । ३ ।
(२) तस्यैव खलु । १ । २ । तस्यैव । ३ ।
(३) भगवान् भरतः । १ । २ । भगवान् । ३ ।
(४) प्रयोजयिष्यतीति । १ । २ । प्रयोक्ष्यतीति । ३ ।
(५) तत् सर्व्वमस्माकमिदमाकूतकरम् । १ । २ । सर्व्वमिदमस्माकमाकूतकरम् । ३ ।
(६) तस्मिन् । १ । २ । तत्र । ३ ।
(७) तदमीषामन्तेवासिनाम् । १ । केषाञ्चिदन्तेवासिनाम् । २ । ३ ।
(८) भरताश्रमम् । १ । ३ । भरताश्रमं प्रति । २ ।
(९) अप्रमादार्थम् । १ । २ ।

कौशल्या। भादा वि दे अत्थि (१) (क)।

लवः। अस्त्यार्य्यः कुशो नाम।

कौशल्या। जेट्ठो त्ति भणिदं होदि (ख)।

लवः। एवमेतत्। प्रसवक्रमेण स किल ज्यायान्(२)।

जनकः। यमजावायुष्मन्तौ (३)।

लवः। अथकिम्।

जनकः। कथय कथाप्रबन्धस्य कीदृशः पर्य्यन्तः।

लवः। अलीकपौरप्रवादोद्विग्नेन राज्ञा निर्व्वासितां देवयजनसम्भवां सीतादेवीमासन्नप्रसववेदनाम् एकाकिनी-मरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति।

कौशल्या। हा वच्छे मुद्धचन्दमुहि को दाणीं दे सरीर-कुसुमस्स (४) देव्वदुव्विलासपरिणामो एअलिआए णिव-डिदो (ग)।

(क) भ्राता अपि ते अस्ति।

(ख) ज्येष्ठः इति भणितं भवति।

(ग) हा वत्से मुग्धचन्द्रमुखि कः इदानीं ते शरीरकुसुमस्य दैवदुर्विलास-परिणामः एकलायाः निपतितः।

कः कीदृशः। दैवदुर्विलासपरिणामः— दैवस्य विधेः दुर्विलासे निपाके परिणामः पर्य्यवसानम्। एकलायाः एकाकिन्याः। निपतितः उपस्थितः।

प्रमादापनोदनार्थम्। ३।

(१) जाद भादा वि दे अत्थि। १। २।

भादा वि दे अत्थि। ३।

(२) ज्यायानिति। १। २। ज्यायान्। ३।

(३) किं यमजावायुष्मन्तौ। १। २।

यमजावायुष्मन्तौ। ३।

(४) कुसुमभूदस्स सरीरस्स। १। २।

सरीरकुसुमस्स। ३।

जनकः। हा वत्से

नूनं त्वया परिभवञ्च नवञ्च घोरं

ताञ्च व्यथां प्रसवकालकृतामवाप्य।

क्रव्याद्गणेषु परितः परिवारयत्सु

सन्त्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि (१) (क)॥

लवः। अरुन्धतीं प्रति (२)। आर्य्ये कावेतौ।

अरुन्धती। इयं कौशल्या अयं जनकः।

लवः। सबहुमानखेदकौतुकं पश्यति।

जनकः। अहो दुर्मर्य्यादता पौराणाम् (३) अहो रामस्य राज्ञः चिप्रकारिता (ख)।

एतद्वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः

क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा (ग)।

(क) नूनं निश्चितम् नवम् अभूतपूर्व्वं घोरं दारुणञ्च परिभवं परित्यागरूपां विमाननां च तां तादृशीं उत्कटामिति यावत् प्रसवकालकृतां प्रसववगाजनितां व्यथां वेदनाञ्च अवाप्य अनुभूय क्रव्याद्गणेषु हिंस्रजन्तुवर्गेषु परितः समन्तात् परिवारयत्सु वेष्टमानेषु सन्त्रस्तया भयार्त्तया त्वया शरणमिति तात मां रक्ष इति असकृत् वारं वारं स्मृतोऽस्मि आहूतोऽस्मि।

(ख) दुर्मर्य्यादता मर्य्यादातिक्रमः। चिप्रकारिता अविमृश्यकारिता।

(ग) एतत् वैशसं सीताविवासनरूपोऽनिष्टापातः तद्रूपं घोरं दारुणं वज्रपतनम् शश्वत् अविश्रान्तम् उत्पश्यतः चिन्तयतः मम क्रोधस्य कोपानलस्य चापेन शापेन वा धक् इति ज्वलितुम् अवसरः समयः चापेन शापेन वा अपराधिनो निपात्य कोपानलमुपशमयेयमित्यर्थः।

(१) स्मृतोऽस्मि।१।२। कृतोऽस्मि।३। (३) दुरात्मनां पौराणाम्।१।२।

(२) लवः।१। लवः। अरुन्धतीं प्रति।२। पौराणाम्।३।

कौशल्या । भअवदि परित्ताहि परित्ताहि पसादेहि रुषिदं (१) राएसिं (क) ।

अरुन्धती ।

एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम् (ख) ।
राजन्नपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः ॥

जनकः ।

शान्तं वा रघुनन्दने तदुभयं तत् पुत्त्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः (ग) ॥

प्रविश्य

सम्भ्रान्ता वटवः । कुमार अश्वः अश्वः इति (२) कोऽपि भूतविशेषो जनपदेषु श्रूयते सोऽयमधुनास्माभिः प्रत्यक्षीकृतः (३) ।

(क) भगवति परित्रायस्व परित्रायस्व प्रसादय रुषितं राजर्षिम् ।

(ख) परिभूतानां विमानितानां मनस्विनाम् मानिनां चित्तं हृदयं प्रायः एतत् एतादृशं भवतीति शेषः ।

(ग) वा अथवा रघुनन्दने रामे तदुभयं चापः शापश्च शान्तं निवृत्तं हि यतः तत् मे मम पुत्त्रभाण्डं पुत्त्रस्थानीयम् पुत्त्रस्थानीयतया रामो ममावध्य एव पौरो जनश्च भूयिष्ठाः भूरिपरिमाणाः द्विजाः ब्राह्मणाः बालाः शिशवः वृद्धाः प्रवयसः विकलाः खञ्जकुब्जादयो विकलाङ्गाः अन्धबधिरादयो विकलेन्द्रियाश्च स्त्रैणं स्त्रीसमूहश्च यस्मिन् सः तादृशः बालवृद्धादीनामवध्यत्वात् पौरजनस्यच तद्वत्सलत्वात् सोऽप्यवध्य एव अतश्चापग्रहणात् शापप्रयोगाच्च विरतोऽस्मीत्यर्थः ।

(१) रुहिदं ।१। कुविदं ।२। रुषिदं ।३।
(२) अश्वोऽश्व इति पशुसमाम्नाये ।१।२। अश्वोऽश्व इति ।३।
(३) सोऽयमस्माभिरधुना स्वयं प्रत्यक्षीभूतः ।१।२। सोऽयमधुनास्माभिः प्रत्यक्षीभूतः ।३।

लवः। अश्व इति (१) पशुसमाम्नाये सांग्रामिके च पठ्यते। तद्ब्रूत कीदृशः (क)।

वटवः। श्रूयताम्

पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं वाख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः (ख)॥

इत्युपसृत्य अजिने हस्तयोश्चाकर्षन्ति।

लवः। सकौतुकोपरोधविनयम्। आर्य्याः पश्यत पश्यत एभिर्नीतोऽस्मि।

इति त्वरितं परिक्रामति।

अरुन्धतीजनकौ। पूरयतु कौतुकं (२) वत्सः।

कौशल्या। भअवदि जाणामि एदं अणालोअअन्ती ण जीआमि विअ अदो अण्णदो भविअ पेक्खम्ह दाव गच्छमाणं दीहाउं (ग)।

अरुन्धती। दूरमतिक्रान्तः (३) स चपलः कथं दृश्यते।

(क) पशुसमाम्नाये पशुशास्त्रे। सांग्रामिके युद्धशास्त्रे।

(ख) विकिरति शकृत्पिण्डकानाम्रमात्रान्— आम्रमात्रान् आम्रफलप्रमाणान् शकृत्पिण्डकान् पुरीषपिण्डान् विकिरति विसृजति। किं वाख्यातैः— वा अथवा आख्यातैः तदाकारादिवर्णनाभिः किम्।

(ग) भगवति जानामि एतम् अनालोकयन्ती न जीवामि इव अतः अन्यतः भूत्वा प्रेक्षामहे तावत् गच्छन्तं दीर्घायुषम्।

(१) अश्वोऽश्व इति। १। २। ३। (३) अतिजवेन दूरमतिक्रान्तः।१।२।
(२) कुतूहलम्।१।२। कौतुकम्। ३। दूरमतिक्रान्तः। ३।

प्रविश्य

कञ्चुकी। भगवान् वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति।

जनकः। अतिगम्भीरमेतत् किमपि भविष्यति। भगवत्यरुन्धति सखि कौशल्ये आर्य्य गृष्टे स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः।

इति निष्क्रान्तो वृद्धवर्गः।

वटवः। पश्यतु (१) कुमारस्तदाश्चर्य्यम्।

लवः। दृष्टमन्गतश्च नूनमाश्वमेधिकोऽयमश्वः (२)।

वटवः। कथं ज्ञायते।

लवः। ननु मूर्खाः पठितमेव युष्माभिस्तत्काण्डे किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः तत्प्रायमेव बलमिदं (३) दृश्यते यदीह न प्रत्ययः तद्गत्वा पृच्छत (क)।

वटवः। भो भोः किम्प्रयोजनोऽयमश्वः परिवृतः पर्य्यटति।

लवः। सस्पृहमात्मगतम्। अये अश्वमेध इति विश्वविजयिनां क्षत्त्रियाणाम् ऊर्ज्जस्वलः सर्व्वक्षत्त्रियपरिभावी महानुत्कर्षनिष्कर्षः (४) (ख)।

(क) तत्काण्डे अश्वमेधप्रकरणे। कवचिनः वर्म्मधारिणः। दण्डिनः दण्डहस्ताः। निषङ्गिणः तूणीरवन्तः।

(ख) ऊर्ज्जस्वलः अत्यूर्जितः। उत्कर्षनिष्कर्षः— प्राधान्यप्रख्यापनम्।

---

(१) पश्यत हि।।।२। पश्यत।३। तत्प्रायमेव बलमिदम्। ३।

(२) अश्व इति। १। २। ३।

(३) तत्प्रायमेवेदमपि। १। २। (४) उत्कर्षनिष्कर्षः। १। उत्कर्षनिकषः। २। ३।

## नेपथ्ये

अयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः (क) ॥

लवः । सव्यथमिव । अहो सन्दीपनान्यक्षराणि (ख) ।

वटवः । किमुच्यते प्राज्ञः खलु कुमारः (ग) ।

लवः । भो भोः तत् किमक्षत्रिया पृथ्वी यदेवमुदीर्य्यते(१) ।

## नेपथ्ये

अरे (२) महाराजं प्रति कुतः क्षत्रियाः ।

लवः । धिग्जाल्मान् (घ) ।

यदि ते सन्ति सन्त्वेव केयमन्या विभीषिका ।
किमुक्तैः सन्निपत्यैव (३) पताकां वो हराम्यहम् (४) (ङ) ॥

(क) सप्तसु लोकेषु एकस्य अद्वितीयस्य वीरस्य दशकण्ठकुलद्विषः रावणवंशनिधनकारिणः रामस्य अयम् अश्वमेधीयोऽश्वः इयं पताका जयवैजयन्ती अथवा वीरघोषणा वीरत्वप्रख्यापनम् अश्वपताके वीरत्वप्रख्यापनप्रयोजनिके इत्यर्थः। भो भोः किम्प्रयोजनोऽयमश्व इत्यादिकस्य वटूनां प्रश्नस्योत्तरमिदम् ।

(ख) सन्दीपनानि क्रोधोद्दीपकानि ।

(ग) किमुच्यते - किम् उच्यते कथ्यते एभिरिति शेषः। प्राज्ञः खलु कुमारः— कुमारः लवः प्राज्ञः अभिज्ञः खलु अश्वमेधिकोऽयमश्व इति कुमारेण यदुक्तम् अश्वानुयात्रिकैरपि तदेवोच्यते अतोऽनेन सर्व्वं बुध्यते इत्यर्थः ।

(घ) जाल्मान् नीचान् असमीक्ष्यकारिणो वा ।

(ङ) यदि ते भवत्प्रभवो रामादयो वीराः सन्ति सन्तु तिष्ठन्तु एव इयं तन्निर्देशरूपा अन्या अपरा का विभीषिका भयप्रदर्शना तन्नामनिर्देशमात्रेण

---

(१) यदेवमुद्धतमुच्यते । १ ।
यदेवमुद्धतमुद्घोष्यते । २ ।
यदेवमुदीर्य्यते । ३ ।

(२) अरे । १ । २ । अरे रे । ३ ।

(३) शरसम्बाधाम् । १ । २ ।
सन्निपत्यैव । ३ ।

(४) पताकां तां हरामि वः । १ । २ ।
पताकां वो हराम्यहम् । ३ ।

भो वटवः लोष्टैर्घ्नन्तः परावर्त्तयतैनमश्वम् (१) एष रोहितानां मध्ये वराकश्चरतु (क)।

प्रविश्य

सक्रोधदर्पः पुरुषः। धिक् चापलं किमुक्तवानसि तीक्ष्ण-नीरसा ह्यायुधीयश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते (२) राजपुत्त्रश्चन्द्रकेतुररिविमर्द्दनः (३) सौम्यपूर्व्वारण्य (४) दर्शन-कुतूहलाक्षिप्तहृदयो न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत (५) (ख)।

न वयं भयमनुभवामः अतो नेयं विभीषिका कृतार्थः। अथवा उक्तैः वृथा-वाग्विस्तरैः किं सन्निपत्य युष्माभिः सङ्गत्य एव अहं वः युष्माकं पताकां वैजयन्तीं हरामि बलात् गृह्णामि।

(क) परावर्त्तयत गमनात् निवर्त्तयत। रोहितानां मृगविशेषाणाम्। वराकः क्षुद्रः।

(ख) तीक्ष्णनीरसाः— तीक्ष्णाः स्वल्पेनापि कारणेन नृशंसव्यवहारिणः नीरसाः शुष्कहृदयाः अतिनिष्ठुरा इति यावत्। आयुधीयश्रेणयः— आयुधेन अस्त्रेण जीवन्तीति आयुधीयाः सैनिकाः तेषां श्रेणयः। दृप्तां गर्व्वितम्। सौम्यपूर्व्वारण्यदर्शनकुतूहलाक्षिप्तहृदयः— सौम्यस्य मनो-हारिणः पूर्व्वारण्यस्य पूर्व्वदिग्विभागवर्त्तिनो वनस्य दर्शनकुतूहलेन अवलोकन-कौतुकेन आक्षिप्तम् आकृष्टं हृदयं यस्य सः तथोक्तः। तरुगहनेन वृक्ष-काननेन वृक्षसङ्कुलेन स्थानेनेति यावत्। अपसर्पत पलायध्वम्।

---

(१) भो भो वटवः परित्यज्य लोष्टैरभिघ्नन्तो नयतैनमश्वम्।१।२। भो वटवः लोष्टैर्घ्नन्तः परावर्त्तयतैनमश्वम्।३।

(२) न दृप्तां वाचमनुसहन्ते।१।२। दृप्तां वाचं न सहन्ते।३।

(३) कालिष्टगरासनः।१।२। अरिविमर्द्दनः।३।

(४) सौम्यपूर्व्वारण्य।१।३। सोऽप्यपूर्व्वारण्य।२।

(५) न परापतत्यद्यापि तत्त्वरितमपसर्पतानेन तरुगहनेन।१।२। न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत।३।

बटवः । कुमार कृतमनेनाश्वेन तर्जयन्ति विस्फुरितशस्त्राः कुमारमायुधीयश्रेणयः दूरे चाश्रमपदमितः तदेहि हरिणप्लुतैः पलायामहे (क) ।

लवः । विहस्य (१) । किंनाम विस्फुरन्ति शस्त्राणि । धनुरारोपयन् ।

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् (ख) ॥

इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ।

कौशल्याजनकयोगो नाम

## चतुर्थोऽङ्कः ।

(क) विस्फुरितशस्त्राः - विस्फुरितानि दीप्यमानानि शस्त्राणि येषां ते तथोक्ताः ।

(ख) ज्याजिह्वया जिह्वाकारया ज्यया शिञ्जिन्या वलयिते आश्लिष्टे उत्कटे उन्नती कोटिदंष्ट्रे दंष्ट्रारूपे कोटी अटन्यौ यस्य तत् उद्गारी उद्गच्छन् घोरः भयङ्करः घनस्य मेघस्येव घर्घरः विकटः घोषः निनादः यस्मात् तत् चापं धनुः ग्रासप्रसक्तस्य जगद्ग्रासायोद्यतस्य हसतः हास्यं कुर्वतः अन्तकस्य कृतान्तस्य यत् वक्त्रयन्त्रं यन्त्राकारं वक्त्रं तस्य या जृम्भा व्यादानं तद्विडम्बि तदनुकारि विकटं विशालम् उदरम् अभ्यन्तरं यस्य तत् तादृशम् अस्तु भवतु ।

---

(१) लवः । १ । २ ।　　　　लवः । विहस्य । ३ ।

# पञ्चमोऽङ्कः ।

---

## नेपथ्ये

भोः भोः सैनिकाः जातं जातमवलम्बनमस्माकम्

त्वन्वेष त्वरितसुमन्त्रनुद्यमान-

व्यावल्गत्प्रजवनवाजिना रथेन ।

उद्घातप्रचलितकोविदारकेतु (१)

श्रुत्वा वः (२) प्रधनमुपैति चन्द्रकेतुः (क) ॥

ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुत-
हर्षसम्भ्रमश्चन्द्रकेतुः (३) ।

चन्द्रकेतुः । आर्य्य सुमन्त्र पश्य पश्य (४)

(क) त्वरितं द्रुतं सुमन्त्रेण तदाख्येन सारथिना नुद्यमानाः प्रेर्य्यमाणाः अत एव व्यावल्गन्तः सत्वरं धावन्तः प्रजवनाः वेगगामिनः वाजिनः यस्य सः तादृशेन रथेन तादृशं रथमारुह्येत्यर्थः उद्घातेन भूमेर्वन्धुरत्वात् रथस्य गति-प्रतिघातेन प्रचलितः प्रचलन् कोविदारकेतुः कोविदारतरुकाष्ठनिर्म्मितो ध्वजो यस्मिन् तद्यथा तथा एषः चन्द्रकेतुः ननु वः युष्माकं प्रधनं युद्धं श्रुत्वा उपैति आगच्छति ।

(१) केतुः । १ । २ । ३ ।     साद्भुतः सहर्षः । ३ ।

(२) वः । १ । ३ ।     नः । २ ।     (४) पश्य । १ । २ ।

(३) साद्भुतहर्षसम्भ्रमः । १ । २ ।     पश्य पश्य । ३ ।

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रनवरतनिगुञ्जत् (१) कोटिना कार्म्मुकेण ॥
समरशिरसि चञ्चत्पञ्चचूडश्चमूना- (२)
मुपरि शरतुषारं कोऽप्ययं वीरपोतः (क) ॥

आश्चर्य्यम् (३)

मुनिजनशिशुरेकः सर्व्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः।
दलितकरिकपोलग्रन्थिटङ्कारघोरं
ज्वलितशरसहस्रः (४) कौतुकं मे करोति (ख) ॥

(क) कलितेन उद्गतेन किञ्चित्कोपेन ईषत्क्रोधेन रज्यन्ती लोहितायमाना मुखश्रीः वदनकान्तिः यस्य सः तथोक्तः चञ्चन्त्यः रणव्यापारवशात् सर्व्वाङ्गचलनेन चञ्चलाः पञ्च चूडाः शिखाः यस्य सः एकशिखस्त्रिशिखः पञ्चशिखो वेति बौधायनस्मरणेन कुलधर्म्मानुसारेण शिखासंख्यानियमनात् कृतचूडाकरणसंस्काराणां रघुवंशीयानां पञ्चशिखाधारणं कुलधर्म्म आसीदिति प्रतिभाति कोऽपि अज्ञातनामान्वयः वीरपोतः वीरशिशुः समरशिरसि रणमूर्द्धनि रणाग्रे इति यावत् अनवरतम् अविश्रान्तं निगुञ्जन्त्यौ शब्दायमाने कोटी अटन्यौ यस्य तत् तादृशेन कार्म्मुकेण धनुषा चमूनां सैनिकानाम् उपरि शरतुषारं बाणतुहिनं किरति, वर्षति अतिबाहुल्यात् तदीयशरपातस्तुषारवर्ष इव प्रतीयते इत्यर्थः।

(ख) दलितेषु विभिन्नेषु करिकपोलग्रन्थिषु गजगण्डसन्धिषु उद्भूतैः टङ्कारैः टम् टम् इत्याकारकैः शब्दैः घोरं भयङ्करं यथा तथा सर्व्वतः समन्ततः सैन्यकाये अस्मदीये सैन्यव्यूहे ज्वलितानि दीप्यमानानि शर-

(१) अविरतगुणगुञ्जत्। १। २।
अनवरतनिगुञ्जत्। ३।

(२) चञ्चच्चन्द्रचूडः। १।
चञ्चलच्चूडः। २। ३।

(३) आश्चर्य्यमाश्चर्य्यम्। १। २।
आश्चर्य्यम्। ३।

(४) ज्वलितशरसहस्रैः। १।
ज्वलितशरसहस्रः। २। ३।

सुमन्त्रः । आयुष्मन्

अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि (क) ॥

चन्द्रकेतुः । इममेकमुद्दिश्य भूयसामारम्भ इति(१) हृदय-मपत्रपते ।

अयं हि शिशुरेकक: समरभार- (२) भूरिस्फुरत्-
करालकरकन्दलीकलित- (३) शस्त्रजालैर्बलैः ।
क्वणत्कनककिङ्किणीझनझनायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदवारिदैरावृतः (ख) ॥

सहस्राणि असंख्याः शराः यस्य सः तथोक्तः रघूणां वंशोऽन्वय एव वंशः वेणुः तस्य अप्रसिद्धः अप्ररूढः अनुपचितावयव इति यावत् नवः अचिरप्ररूढः प्ररोहः करीरः इव अन्यत्र तादृशवीर्य्यातिशयस्यासम्भवात् रघुकुलकुमार-त्वेन प्रतीयमान इत्यर्थः एकः एकलः असहाय इति यावत् मुनिजनशिशुः ऋषिकुमारः मे मम कौतुकं चमत्कारं करोति जनयति ।

(क) तवैव तुल्यरूपं सर्व्वथा त्वत्सदृशम् अतिशयितः अतिक्रान्तः सुराणा मसुराणाञ्च प्रभावः वीर्य्यं येन तं तथोक्तं शिशुम् अवलोक्य कुशिकसुतस्य विश्वामित्रस्य मखद्विषां यज्ञविघातिनां राक्षसानां प्रमाथे संहारे तदर्थमित्यर्थः धृतं धनुर्येन तं तादृशं रघुनन्दनं रामभद्रं स्मरामि ।

(ख) समरभारे रणव्यापारे भूरि प्रभूतं स्फुरन्ति दीप्यमानानि करालानि विशालानि करकन्दलीकलितानि करतलधृतानि शस्त्रजालानि आयुधसमूहाः येषां तैः क्वणन्तीभिः शब्दायमानाभिः कनककिङ्किणीभिः सौवर्णक्षुद्र-घण्टिकाभिः झनझनायिताः झन्झनेत्याकारकशब्दबहुलाः स्यन्दनाः रथाः येषु तैः अमन्दः अनल्पः मदः मदस्रावः दुर्दिनमिव येषां तादृशाः द्विरदाः

---

(१) आरम्भ इति । १ । २ । पर्य्यारम्भ इति । ३ ।

(२) रेणु । १ । २ । भार । ३ ।

(३) कलित । १ । २ । जटिल । ३ ।

सुमन्त्रः । वत्स एभिः समस्तैरपि किमस्य किंपुनर्व्यस्तैः ।

चन्द्रकेतुः । आर्य्य त्वर्य्यतां त्वर्य्यताम् (१) अनेन हि महा-नाश्रितजनप्रमाथोऽस्माकमारब्धः । तथाहि

आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्ड (२) निकरैर्वीरो विधत्ते भुवः
तृप्यत्कालकरालवक्त्रविघसव्याकीर्य्यमाणा इव (क) ॥

सुमन्त्रः । स्वगतम् । कथमीदृशेन सह वत्सस्य चन्द्रकेतो(३) र्द्वन्द्वसंप्रहारमनुजानीयाम् । विचिन्त्य । अथवा इक्ष्वाकुगृहहृद्धाः खलु वयम् प्रत्युपस्थिते च का गतिः (ख) ।

गजाः वारिदाः मेघा इव येषु तैः तथोक्तैः बलैः अस्मदीयैः सैनिकैः एकक: एकलः अयं शिशुः आहतः परिहृतः हि ।

(क) अयं वीरः आगुञ्जन्तीभ्यः गर्ज्जन्तीभ्यः गिरिकुञ्जकुञ्जरघटाभ्यः गिरि-कुञ्जवर्त्तिनां कुञ्जराणां गजानां घटाभ्यः श्रेणिभ्यः विस्तीर्णः दत्तः कर्णज्वरः कर्णव्यथा येन तम् अमन्दैः अनल्पैः दुन्दुभिरवैः अस्मदीयदुन्दुभिध्वनिभिः आध्मातं प्रबलीकृतम् ज्यानिर्घोषं शिञ्जिनीनिनादम् उज्जृम्भयन् आवि-ष्कुर्व्वन् वेल्लतां चलतां भैरवानां भयङ्कराणां रुण्डानां कबन्धानां मुण्डनिकरैः कबन्धेभ्यः पृथक्कृतैर्भूतलपतितैः शिरःसमूहैः भुवः रणभूमीः तृप्यतः तृप्तिमा-पन्नस्य कालस्य कृतान्तस्य करालवक्त्रविघसैः विकटमुखनिर्गलितैः विघसैः भक्त-शेषैः व्याकीर्य्यमाणाः व्याप्यमानाः इव विधत्ते करोति ।

(ख) ईदृशेन अमितविक्रमशालिना । द्वन्द्वसम्प्रहारं द्वन्द्वयुद्धम् । इक्ष्वाकु-गृहहृद्धाः खलु वयम् प्रत्युपस्थिते च का गतिः वयम् इक्ष्वाकूणां गृहेषु

(१) त्वर्य्यताम् । १ । २ ।
त्वर्य्यतां त्वर्य्यताम् । ३ ।
(२) भूरिरुण्ड । १ । २ ।
रुण्डमुण्ड । ३ ।
(३) वत्सचन्द्रकेतोः । १ । २ ।
वत्सस्य चन्द्रकेतोः । ३ ।

चन्द्रकेतुः। सविस्मयलज्जासम्भ्रमम्। धिक् प्रतिनिवृत्तानि सर्व्वतः सैन्यानि मम (क)।

सुमन्त्रः। रथवेगमभिनीय। आयुष्मन् एष वाग्विषयीभूतः स वीरः (१) (ख)।

चन्द्रकेतुः। विस्मृतिमभिनीय। आर्य्य किमस्य (२) नामधेयमाख्यातमाख्यायकैः (ग)।

सुमन्त्रः। लव इति (३)।

चन्द्रकेतुः।

भो भो लव महाबाहो किमेभिस्तव सैनिकैः।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु॥

सुमन्त्रः। कुमार पश्य पश्य

वृद्धाः वृद्धिं गताः आ शैशवात् तत्र स्थिता इति यावत् अतस्तेषां केनापि कारणेन संग्रामादनिवर्त्तित्वरूपं कुलव्रतं जानामीत्यर्थः प्रत्युपस्थिते आपतिते अस्मिन् विषये का गतिः क उपायः अवश्यमेतेन सह चन्द्रकेतुना समरे प्रवर्त्तितव्यमिति भावः।

(क) प्रतिनिवृत्तानि पराङ्मुखीभूतानि।

(ख) वाग्विषयीभूतः— वाचाम् अस्मदीयानां संलापानां विषयीभूतः गोचरीभूतः इयच्चिरमावां यत्सम्बन्धिनीं कथां कथयामासिवेत्यर्थः।

(ग) आख्यायकैः रणभूमौ उभयपक्षप्रधानपरुषाणां नामकीर्त्तननियुक्तैः पुरुषैः।

(१) स एष वाग्विषयीकृतस्ते प्रवीरः। १। २।
एष वाग्विषयीभूतः स वीरः। ३।

(२) किन्नु। १। २। किमस्य। ३।
(३) वत्स लव इति। १। २।
लव इति। ३।

व्यपवर्त्तते एष बालवीरः पृतनानिर्मथनात् त्वयोपहूतः।
स्तनयित्नुरवादिभावलीनामवमर्द्दादिव दृप्तसिंहशावः (क)॥

ततः प्रविशति त्वरितोद्धतक्रमो(१) लवः (ख)।

लवः। साधु राजपुत्त्र साधु सत्यमैक्ष्वाकः खल्वसि तदयं परागत एवास्मि।

नेपथ्ये

महान् कलकलः।

लवः। सावेगं परिवृत्य (२)। आः कथमिदानीं(३) भग्ना अपि प्रतिनिवृत्य (४) युद्धाभिसारिणः पर्य्यवष्टभ्य निघ्नन्ति मां चमूपतयः। धिग्जाल्मान् (ग)।

अयं शैलाघातक्षुभितवड़वावक्त्रहुतभुक्-
प्रचण्डक्रोधार्च्चिर्निचयकवलत्वं व्रजतु मे।

(क) एषः बालवीरः शिशुवीरः त्वया उपहूतः संग्रामार्थमाहूतः सन् दृप्तः दर्पपूर्णः सिंहशावः सिंहशिशुः स्तनयित्नुरवात् मेघगर्ज्जनशब्दमाकर्ण्य इभावलीनां गजश्रेणीनाम् अवमर्द्दात् संहारात् इव पृतनानाम् अस्मत्-सैन्यानां निर्मथनात् विनाशात् व्यपवर्त्तते निवर्त्तते।

(ख) त्वरितोद्धतक्रमः— त्वरितः वेगवान् उद्धतः गर्व्वितः क्रमः पद-क्षेपः यस्य सः तथोक्तः।

(ग) युद्धाभिसारिणः— युद्धम् अभिसरन्ति ये ते युद्धाभिसारिणः युद्धा-काङ्क्षिण इत्यर्थः। पर्य्यवष्टभ्य स्थिरीभूय साहसमवलम्ब्येति यावत्।

---

(१) त्वरितोद्धतपराक्रमः। १। २। त्वरितोद्धतक्रमः। ३।
(३) कथमिदानीम्। १। २। आः कथमिदानीम्। ३।
(२) पर्य्यावृत्य। १। २। परिवृत्य। ३।
(४) प्रतिनिवृत्य। १। २। पर्य्यावृत्य। ३।

समन्तादुत्सर्पन् घनतुमुलसेना (१) कलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव (क) ॥

इति परिक्रामति ।

चन्द्रकेतुः । भो भोः कुमार

अत्यद्भुतादपि (२) गुणातिशयात्प्रियो मे (३)
तस्मात् सखा त्वमसि यन्मम तत्तवैव ।
तत् किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥

लवः । सहर्षसम्भ्रमम् परावृत्य । अहो महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्त्तनकुलकुमारस्य तत् किमेभिः एनमेव तावत् सम्भावयामि (ख) ।

(क) प्रलयपवनेन प्रलयकालोदितेन संहारवायुना आस्फालितः परिचालितः पयोराशेः समुद्रस्य ओघः प्रवाहः इव समन्तात् सर्व्वतः उत्सर्पन् उच्छलन् अयं घनः सान्द्रः तुमुलः सङ्कुलः सेनाकलकलः सैन्यकोलाहलः शैलानाम् अर्णवगर्भवर्त्तिनाम् पर्व्वतानाम् आघातेन क्षुभितः विकृतिं प्राप्तः यः वडवावक्त्रहुतभुक् वडवामुखस्थः वह्निः वडवानलः इत्यर्थः तद्वत् प्रचण्डः अतिभीषणः यः मे मम क्रोधार्च्चिर्निचयः क्रोधानलशिखाराशिः तस्य कवलत्वं ग्रासत्वं व्रजतु प्राप्नोतु मदीयः क्रोधोऽचिरेणैव सेनाकोलाहलमिमं शमयिष्यतीत्यर्थः ।

(ख) प्रसन्नकर्कशा — प्रसन्ना सौजन्यपूर्णत्वात् मधुरा कर्कशा वीररसपूर्णत्वात् तीक्ष्णा च । सम्भावयामि रणकर्म्मणा सम्मानयामि ।

(१) हेला । १ । सेना । २ । ३ ।
(२) अपि । १ । २ । ३ ।
(३) प्रियोऽसि । १ । २ ।
प्रियो मे । ३ ।

पुनर्नेपथ्ये

कलकलः ।

लवः । सक्रोधनिर्वेदम् । आः कदर्थितोऽहमेभिर्वीरसंवाद-विघ्नकारिभिः पापैः (१) (क) ।

इति तदभिमुखं परिक्रामति ।

चन्द्रकेतुः । आर्य्य दृश्यतां द्रष्टव्यमेतत् (२)

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधासमुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् (ख) ॥

सुमन्त्रः । कुमार एवैनं द्रष्टुमपि जानाति वयन्तु केवलं परवन्तो (३) विस्मयेन ।

चन्द्रकेतुः । भो भो राजानः

(क) निर्वेदः विरक्तिः । कदर्थितः क्लेशितः । वीरसंवादविघ्नकारिभिः—वीरेण सह संवादः समागमः रणव्यापारे प्रवृत्तिरिति यावत् तस्य विघ्नकारिभिः विघ्नजनकैः ।

(ख) कौतुकवता विस्मयकरेण दर्पेण गर्व्वेण मयि बद्धं लक्ष्यं येन सः तथोक्तः पश्चात् बलैः अस्मदीयैः सैन्यैः अनुसृतः अनुद्रुतः उदीर्णधन्वा उद्यतशरासनः अयं वीरः द्वेधा द्वाभ्यां प्रकाराभ्यां समुद्धतेन उन्मूलितेन मरुता वायुना तरलस्य विचलितस्य 'माघवतचापधरस्य मघोनः इन्द्रस्य इदं माघवतं तादृशस्य चापस्य धनुषः धरः वोढा' तस्य शक्रधनुर्लाञ्छितस्येत्यर्थः मेघस्य लक्ष्मीं सादृश्यं धत्ते वहति ।

(१) वारंवारं विघ्नकारिभिर्घोरैः । १ ।
वारंवारं वीरसंवादविघ्नकारिभिः ।२।
वीरसंवादविघ्नकारिभिः पापैः ।३।
(२) एतद् द्रष्टव्यम् । १ । २ ।
(२) द्रष्टव्यमेतत् । ३ ।
(३) केवलन्तु परवन्तो वयम् । १ ।
'वयन्तु केवलं परवन्तः । २ ।
केवलं परवन्तो वयम् । ३ ।

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन् कवचनिचितैर्मेध्यचर्म्मोत्तरीये ।
कालज्येष्ठैरभिनव (१) वयःकाम्यकाये भवद्भि-
र्योऽयं बद्धो युधि परिकरस्तेन वो धिक् धिगस्मान् (क) ॥

लवः । सोन्माथम् (२) । कथमनुकम्पते नाम । विचिन्त्य । भवतु कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि (ख) ।

इति ध्यानं नाटयति ।

सुमन्त्रः । तत् किमकस्मादस्मत्सैन्यघोषः प्रशाम्यति (३) (ग) ।

लवः । पश्याम्येनमधुना सप्रगल्भम् (घ) ।

(क) सङ्ख्यां गणनाम् अतीतैः अतिक्रान्तैः अगणनैरित्यर्थः द्विरदेषु हस्तिषु तुरगेषु अश्वेषु स्यन्दनेषु रथेषु च तिष्ठन्ति इति तैः द्विरदारूढैः तुरगारूढैः स्यन्दनारूढैश्चेत्यर्थः कवचैः वर्म्मभिः निचितैः आवृतैः कवचरक्षितकायैरित्यर्थः कालेन वयसा ज्येष्ठैः प्रौढवयोभिरित्यर्थः भवद्भिः युष्माभिः पदातौ पादचारिणि एकस्मिन् एकाकिनि मेध्यं पवित्रं चर्म्म उत्तरीयम् उत्तरासङ्गः यस्य तस्मिन् कवचेनासंरक्षितकाये इत्यर्थः अभिनवेन नूतनेन वयसा बाल्येनेत्यर्थः काम्यकाये कोमलकलेवरे अत्र अस्मिन् शिशौ युधि युद्धे यः अयं परिकरः कटिः बद्धः रणकर्म्म प्रारब्धमित्यर्थः तेन हेतुना वः युष्मान् धिक् तथा अस्मान् धिक् युष्माकमेवंविधेन रणकर्म्मणा नितरां व्रीड़ितोऽस्मीत्यर्थः ।

(ख) सोन्माथम् — उन्माथः व्यथा तेन सह यथा तथा चन्द्रकेतोर्वचनश्रवणेन व्यथामनुभूयेत्यर्थः ।

(ग) अस्मत्सैन्यघोषः— अस्माकं सैन्यानां घोषः कलकलः ।

(घ) सप्रगल्भम्— प्रगल्भो गर्व्वः तेन सह तं गर्व्वितमित्यर्थः

(१) अचरम । १ । २ । अभिनव । ३ ।

(२) सोन्माथम् । १ । ३ । सक्षोभम् । २ ।

(३) अस्माकं बले सैन्यघोषाः प्रशाम्यन्ति । १ । २ । अस्मत्सैन्यघोषः प्रशाम्यति । ३ ।

सुमन्त्रः। वत्स मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रि- तम् (१) (क)।

चन्द्रकेतुः। अत्र कः सन्देहः।

व्यतिकर इव (२) भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं छिनत्ति।
अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतमजित (३) वीर्य्यं जृम्भते जृम्भकास्त्रम् (ख)॥

आश्चर्य्यमाश्चर्य्यम्

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवस्तीर्य्यते (४)
मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव (ग)॥

(क) आमन्त्रितम् आहूतं प्रयुक्तमिति यावत्।

(ख) भीमः भयङ्करः तमसामयं तामसः विद्युतामयं वैद्युतः तादृश इव व्यतिकरः तमोराशिविद्युत्पुञ्जयोरिव सन्निपातः प्रथमं ग्रस्तं निमीलितं पश्चात् मुक्तम् उन्मीलितं चक्षुः प्रणिहितं विषयग्रहाय प्रयुक्तम् अपि छिनत्ति नितरां व्यथयति अथ किञ्च एतत् सैन्यम् अस्मदीयं बलं लिखितं चित्रार्पितम् इव निष्पन्दं निश्चलं सत् आस्ते अवतिष्ठते नियतं निश्चितम् अजितवीर्य्यम् अप्रतिहतबलं जृम्भकास्त्रं जृम्भते स्फुरति एतत् सर्व्वं जृम्भकास्त्रप्रयोगं विना न सम्भवतीत्यर्थः।

(ग) पातालोदरकुञ्जेषु पातालाभ्यन्तरवर्त्तिषु कुञ्जेषु लताप्रतानावृतेषु स्थानेषु पुञ्जितानि उपचितानि यानि तमांसि अन्धकाराणि तद्वत् श्यामैः कृष्णवर्णैः

(१) जृम्भकास्त्रमामन्त्रितम्। १। २। भवतोऽन्यं मन्त्रेण लम्भितम्। ३।
(२) इव। १। ३। इह। २।
(३) अमित। १। २। अजित। ३।
(४) अवाकीर्य्यते। १। २। अवस्तीर्य्यते। ३।

सुमन्त्रः । कुतः पुनरस्य जृम्भकाणामागमः स्यात् (१) ।

चन्द्रकेतुः । भगवतः प्राचेतसादिति मन्यामहे ।

सुमन्त्रः । वत्स नास्य (२) व्यवहारोऽस्त्रेषु विशेषतो जृम्भकेषु (३) ।

यतः

कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः ।
अथ तत्सम्प्रदायेन रामभद्रे व्यवस्थिताः (४) (क) ॥

चन्द्रकेतुः । अपरेऽपि परमोपचीयमानसत्त्वप्रकाशाः स्वयं हि मन्त्रदृशः पश्यन्ति (ख) ।

तथा उत्तप्तस्य अग्निसन्तापेन द्रुतस्य अतएव स्फुरतः प्रदीप्यमानस्य आरकूटस्य पित्तलस्य कपिलं पिङ्गलं यत् ज्योतिः तद्वत् ज्वलन्ती देदीप्यमाना दीप्तिः ज्योतिः येषां तैः तथोक्तैः जृम्भकैः लवप्रयुक्तैस्तदाख्यैरस्त्रैः कल्पस्य ब्रह्माण्डस्य आक्षेपः अवसानम् प्रलयकालः तस्मिन् उदिताः कठोराः दुर्निवाराः भैरवाः भयङ्कराः ये मरुतः वायवः तैः व्यस्तैः विक्षिप्तैः मीलन्तः संसजन्तः मेघाः येषु ते मीलन्मेघाः तडिद्भिः विद्युद्भिः कडाराणि पिङ्गलानि कुहराणि विवराणि येषां ते तडित्कडारकुहराः मीलन्मेघाश्च ते तडित्कडारकुहराश्च तैः तादृशैः विन्ध्याद्रिकूटैः विन्ध्यगिरिशिखरैः इव नभः आकाशम् अवस्तीर्यते व्याप्यते ।

(क) कृशाश्वतनयाः कृशाश्वेन सृष्टाः । तत्सम्प्रदायेन तस्य कौशिकस्य सम्प्रदायेन शिष्यत्वाभ्युपगमेन ।

(ख) परमं सातिशयं उपचीयमानः परिवर्द्धमानः सत्त्वस्य बलस्य आर्षस्य तेजस इति यावत् प्रकाशः उदयः येषां ते तथोक्ताः अपरे कृशाश्वादन्ये अपि मन्त्रदृशः मन्त्रस्रष्टारः स्वयं हि अन्योपदेशं विनैव पश्यन्ति दिव्यास्त्राणि लभन्ते ।

---

(१) जृम्भकाणामागमः स्यात् ।१।२। जृम्भकास्त्राधिगमः ।३।

(२) नैषः ।१।१। नास्य ।२।

(३) जृम्भकेषु ।१।२। जृम्भकास्त्रेषु ।३।

(४) स्थिता इति ।१।२। व्यवस्थिताः ।३।

सुमन्त्रः। वत्स सावधानो भव परागतः प्रवीरः।

कुमारौ। अन्योन्यम् (१)। अहो प्रियदर्शनः कुमारः। सस्नेहानुरागं निर्वर्ण्य।

यदृच्छासंवादः किमु किमु गुणानामतिशयः
पुराणो वा जन्मान्तरनिविडबन्धः परिचयः।
निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो
ममैतस्मिन् दृष्टे हृदयमवधानं रचयति (क)॥

सुमन्त्रः। भूयसा जीविधर्म्म एष यद्रसमयी कस्यचित् क्वचित्प्रीतिः यत्र लौकिकानां व्याहारः (२) तारामैत्रकं (३) चक्षूरागः इति तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति (ख)।

(क) यदृच्छया विना हेतुम् अकस्मादित्यर्थः संवादः किमु समागमः किं गुणानाम् एतस्मिन् लक्ष्यमाणानां शौर्य्यगाम्भीर्य्यसौजन्यादीनाम् अतिशयः किमु उत्कर्षः किं जन्मान्तरे अन्यस्मिन् जन्मनि निविडः दृढ़ः बन्धः स्नेहबन्धनं यस्य तादृशः पुराणः पूर्व्वतनः परिचयः वा बन्धुत्वादिरूपः सम्बन्धः किं विधिवशात् दैवदुर्विलासात् अविदितः अपरिज्ञातः कोऽपि निजः आत्मीयः भ्रातृत्वादिरूप इति यावत् सम्बन्धः वा किमु किं दृष्टे दृष्टिविषये एतस्मिन् मम हृदयं चित्तम् अवधानम् ऐकाग्र्यं प्रीतिप्रवणतामिति यावत् रचयति गमयति।

(ख) भूयसा प्रायशः एषः जीविनां प्राणिनां धर्म्मः स्वभावः यत् कस्यचित् जनस्य क्वचित् कस्मिंश्चित् जने रसमयी प्रणयात्मिका प्रीतिः प्रवृत्तिः यत्र यस्मिन् लौकिकानां मानववर्गाणां तारामैत्रकमिति चक्षूराग इति च व्याहारः निर्देशः तम् अप्रतिसंख्येयम् अनिर्व्वचनीयस्वरूपम् अनिबन्धनम् अहेतुकं प्रेमाणम् आमनन्ति कथयन्ति। ताराणाम् अक्षिकनीनिकानां मैत्रकं मित्रत्वं तारामैत्रकम् चक्षुषां नयनानां रागः अनुरागः चक्षूरागः। अकृत्रिमं

(१) अन्योन्यं प्रति।१।२। अन्योन्यम्।३। (३) तारामैत्रकं वा।१।२।
(२) उपचारः।१।२। व्याहारः।३। तारामैत्रकम्।३।

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्म्माणि सीव्यति (क)॥

कुमारौ। अन्योन्यम् (१)।

एतस्मिन् मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव शायकाः शरीरे।
यत्प्राप्तौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्ब (२) मङ्गमास्ते (ख)॥

किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः।

हि प्रेम न किमपि निमित्तमपेक्षते परस्परमवलोकनमात्रेणैव द्वयोर्हृदये तादृशस्य प्रेम्णः सञ्चारो भवति अतएव तत् तारामैत्रकसंज्ञया चक्षूरागसंज्ञया च निर्द्दिश्यते इत्यर्थः।

(क) नास्ति हेतुर्निमित्तं यस्य सः अहेतुः विना हेतुमुपजात इत्यर्थः यः पक्षपातः प्रणयः तस्य प्रतिक्रिया निवारणम् उच्छेद इति यावत् नास्ति न भवति स्नेहात्मकः स्नेहमयः सः तन्तुः प्रणयसूत्रसन्तानः अन्तर्मर्म्माणि अन्तःकरणवृत्तीः सीव्यति दृढं बध्नाति प्रणयिणोरन्तःकरणतत्त्वमेकीकरोतीत्यर्थः।

(ख) मसृणितः संस्कारेण चिक्कणितः यः राजपट्टः मणिविशेषः तद्वत् कान्ते कमनीये, एतस्मिन् शरीरे कथमिव कथं वा शायकाः शराः मोक्तव्याः प्रयोक्तव्याः परिरम्भणाभिलाषात् आलिङ्गनस्पृहया यत्प्राप्तौ यस्य शरीरस्य समागमलाभार्थं मम अङ्गं शरीरम् उन्मीलत् आविर्भवत् पुलककदम्बं रोमाञ्चचयो यस्मिन् तादृशं सत् आस्ते तिष्ठति।

(१) अन्योन्यं प्रति। १। २। अन्योन्यम्। ३।

(२) उन्मीलत्पुलककदम्बम्। १। २। आबद्धोत्पुलकमसङ्गम्। ३।

किं वक्ष्यत्ययमेव युद्धविमुखं (१) मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते (क) ॥

सुमन्त्रः । एकं निर्वर्ण्य सास्रमात्मगतम् । हृदय किमन्यथा परिकल्पसे (ख)

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम् ।
लतायां पूर्व्वलूनायां प्रसूनस्यागमः कुतः (ग) ॥

चन्द्रकेतुः । अवतराम्यार्य्य (२) सुमन्त्र स्यन्दनात् ।

सुमन्त्रः । तत् कस्य हेतोः ।

चन्द्रकेतुः । यतस्तावदयं वीरपुरुषः पूजितो भवति (३)

(क) किन्तु आक्रान्तम् अङ्गीकृतम् अवलम्बितमिति यावत् कठोरं तीक्ष्णं तेजः युद्धाभिनिवेशरूपं येन तस्मिन् तादृशे अस्मिन् वीरे शस्त्रं विना का गतिः क उपायः अस्मिन् रणोन्मुखे मयाप्यवश्यं शस्त्रं ग्रहणीयमित्यर्थः यस्य शस्त्रस्य ईदृश· अप्रमितविक्रमशाली वीरपुरुषः विषयः गोचरः न जायेत न भवेत् तेन शस्त्रेण अपि हि किं तादृशं शस्त्रं सर्व्वथा निष्फलमिति भावः आयुधे शस्त्रे उद्यते अपि रणकर्म्मणि प्रवृत्तेऽपीत्यर्थः युद्धविमुखं स्नेहवशात् समरपराङ्मुखं माम् अयमेव कि वक्ष्यति कथयिष्यति दारुणः निष्ठुरः रसः यस्य स· तादृशः वीराणां समयः आचारः स्नेहक्रमं स्नेहप्रसरं बाधते प्रतिबध्नाति।

(ख) किमन्यथा परिकल्पसे— किं कथम् अन्यथा प्रकारान्तरेण परिकल्पसे तर्कयसि अस्य रामतनयत्वासम्भवात् आकारसादृश्यविमोहितः कथमिमं रामतनयं सम्भावयसीत्यर्थः।

(ग) वीजं सीतारूपम्। आदितः आदौ पूर्व्वमेवेत्यर्थः।

(१) अयमेवमद्यविमुखम् । १ । २ ।
अयमेव युद्धविमुखम् । ३ ।
(२) अवतराम्यहमार्य्य । १ । २ ।
अवतराम्यार्य्य । ३ ।
(३) वीरपुरुषः पूजितः । १ । २ ।
वीरपुरुषोऽस्माभिः पूजितः । ३ ।

अपि खलु आर्य्य चात्त्रधर्म्मस्यानुगृहीतो भवति (१) न रथिनः पादचारमायोधयन्ति इति शास्त्रविदः (२) परिभाषन्ते (क) ।

सुमन्त्रः । स्वगतम् । कष्टं बतानुप्रपन्नोऽस्मि (ख) ।

कथं न्याय्यमनुष्ठानं माहृशः प्रतिषेधतु ।
कथं वाभ्यनुजानातु (३) साहसैकरसां क्रियाम् (ग) ॥

चन्द्रकेतुः । यदा तातमिश्रा अपि पितुः प्रियं सखायं (४) धर्म्मसंशयेष्वार्य्यमेव पृच्छन्ति तत् किमार्य्यो विमृशति ।

सुमन्त्रः । आयुष्मन् एवं यथाधर्म्ममभिमन्यसे

(क) पूजितः आहृतः अयं वीरपुरुषो भूतले तिष्ठति अहं रथादवतरेयं चेदस्यादरः कृतो भवतीत्यर्थः । अनुगृहीतः अनुसृतः । रथिनः रथस्थाः । पादचारं पदातिं भूतलस्थमिति यावत् ।

(ख) बत खेदे कष्टं विपदम् अनुप्रपन्नः प्राप्तः अस्मि । विपदं दर्शयत्युत्तरश्लोकेन ।

(ग) न्याय्यमनुष्ठानम्— न्याय्यं न्यायादनपेतम् अनुष्ठानम् आचरणम् प्रतिद्वन्द्विनः पादचारित्वात् रथादवतीर्य्य तेन सह योधनरूपम् । साहसैकरसां क्रियाम्— साहसम् एव एकः केवलः रसः प्रवृत्तिहेतुः यस्यां तादृशीं क्रियाम् ईदृशेन वीरपुरुषेण सह पादचारेण योधनरूपाम् अयं हि साहसमाश्रित्यैव पादचारेण योद्धुमुत्सहते तथा सति चास्य विपदवधारितेति भावः ।

---

(१) अपिच खल्वार्य्य चात्त्रधर्म्मः समनुगतः । १ ।
अपिच खल्वार्य्य चात्त्रधर्म्मः परिपालितः । २ ।
अपि खल्वार्य्य चात्त्रधर्म्मस्यानुगृहीतः । ३ ।

(२) शस्त्रदेवताः । १ । २ ।
शास्त्रविदः । २ ।

(३) वाप्यनुजानातु । १ । २ ।
वाभ्यनुजानातु । ३ ।

(४) प्रियं सखायम् । १ । २ ।
प्रियसखम् । २ ।

एष सांग्रामिको न्याय एष धर्म्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः (क) ॥

चन्द्रकेतुः । प्रतिरूपं वचनमार्य्यस्य ।

इतिहासं पुराणञ्च धर्म्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणाञ्च कुलस्थितिम् (ख) ॥

सुमन्त्रः । सस्नेहास्रं परिष्वज्य ।

जातस्य ते पितुरपीन्द्रजितो विजेतुः (१)
वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुगच्छति वीरवृत्तं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् (ग) ॥

चन्द्रकेतुः । सकष्टम् ।

अप्रतिष्ठे रघुज्येष्ठे का प्रतिष्ठा कुलस्य नः ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे (घ) ॥

सुमन्त्रः । अहह हृदयमर्म्मदारणान्येतानि (२) चन्द्रकेतो-र्वचनानि ।

लवः । हन्त मिश्रीकृतो रसो (३) वर्त्तते

(क) वीरचारित्रपद्धतिः वीरचर्य्यानियमः ।

(ख) इतिहासं पुरावृत्तम् । पुराणं पूर्व्वतनीं कथाम् । धर्म्मप्रवचनानि—धर्म्मस्य प्रवचनं निर्णयः येषु तानि धर्म्मशास्त्राणीत्यर्थः । कुलस्थितिं कुल-मर्य्यादां कुलाचारमिति यावत् ।

(ग) प्रतिष्ठां स्थितिं अविच्छेदमिति यावत् ।

(घ) अप्रतिष्ठे— प्रतिष्ठा वंशस्थितिः पुत्त्रविरहात् तद्रहिते ।

(१) निहन्तुः । १ । २ । विजेतुः । ३ । (२) रसक्रमः । १ । २ ।
(२) दारुणानि । १ । २ । दारणानि । ३ । रसः । ३ ।

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन् दृष्टिर्मम कलहकामः पुनरयम् ।
झनत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्वणरसः (१) (क) ॥

चन्द्रकेतुः । अवतरन् (२) । आर्य्य सावित्रश्चन्द्रकेतुरभिवादयते ।

सुमन्त्रः ।

अजितं पुण्यमूर्ज्जस्वि (३) ककुत्स्थस्येव ते महः ।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् (ख) ॥

अपिच ।

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽभिनन्दतु (४) गुरुर्यस्ते गुरूणामपि ।

(क) इन्दौ चन्द्रे समुपोढे समुदिते कुमुदिनी यथा आनन्दं प्रीतिं व्रजति प्राप्नोति मम दृष्टिः नयनम् अस्मिन् वीरे तथैव तद्वदेव प्रीतिमनुभवतीत्यर्थः झनत्काररूपं क्रूरम् अतिकर्कशं क्वणितं ध्वनिर्यस्य स तादृशः. गुणः शिञ्जिनी यस्य तत् तथोक्तम् अतएव गुञ्जत् शब्दायमानं यत् गुरु वृहत् धनुः तस्मिन् धृतं बद्धं प्रेम अनुरागः येन सः विकचः सुव्यक्तः विकरालः अतिविशालः उल्वणरसः उद्भटरसः वीररस इति यावत् यस्य सः तादृशः अयं बाहुः पुनः कलहकामः कलहोद्यतः ।

(ख) शाश्वतः नित्यः वराहो देवः श्रेयसे शुभाय विजयलाभायेत्यर्थः ककुत्स्थस्य इक्ष्वाकुवंशोद्भवस्य सुप्रसिद्धस्य राज्ञः इव ते तव अजितम् अप्रतिहतं पुण्य पवित्रम् ऊर्ज्जस्वि अत्यूर्ज्जितं महः तेजः परिकल्पतां विधत्ताम् ।

---

(१) विकचविकरालोल्वणरसः । १ । २ । अवतरन् । ३ ।
विकटविकरालप्रणसुखः । ३ । (३) ऊर्ज्जस्वि । १ । २ । ओजस्वि । २ ।
(२) अवतरणं रूपयन् । १ । २ । (४) अभिनन्दतु ।१।३। अपि नन्दतु ।२।

ऐन्द्रं वैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयाद्देव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् (क) ॥

लवः । कुमार अति हि नाम शोभसे रथस्थ एव कृतं कृतमत्यादरेण ।

चन्द्रकेतुः । तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु ।

लवः । आर्य्य प्रत्यारोपय रथोपरि राजपुत्त्रम् ।

सुमन्त्रः । त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम् ।

लवः । को विचारः स्वेषूपकरणेषु किन्तु अरण्यसदो वयमनभ्यस्तरथचर्य्याः (ख) ।

सुमन्त्रः । जानासि वत्स दर्पसौजन्ययोर्यथोचितमाचरितुम् (१) । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत् (२) तदास्य स्नेहेन हृदयमभिस्यन्देत (ग) ।

(क) धिनोतु प्रीणातु । पिता आदिपुरुषः । मैत्रावरुणि वशिष्ठः । अभिनन्दतु विजयमाशंसताम् । गुरूणां पितृपितामहादीनाम् । अग्निमरुतोरिदम् आग्निमारुतम् । सुपर्णो गरुडः तस्येदं सौपर्णम् । रामलक्ष्मणधनुर्ज्याघोषमन्त्रः रामस्य लक्ष्मणस्य च धनुषोः ज्याघोषः शिञ्जिनीध्वनिः तद्रूपः मन्त्रः ।

(ख) स्वेषु स्वप्रयोजनकेषु उपकरणेषु रथगजतुरगादिरूपेषु समरोपयोगिषु वस्तुषु को विचारः विवेकः भवदीयरथारोहणे न कोऽपि दोषोऽस्तीत्यर्थः किन्तु अरण्यसदः वनवासिनः वयम् अनभ्यस्ता अपरिचिता रथचर्य्या रथव्यवहारो यैः तादृशाः ।

(ग) यथोचितम् अनुरूपम् ।

(१) यथाचरितम् । १ ।
यथोचितमीरयितुम् । २ ।
यथोचितमाचरितुम् । ३ ।
(२) यदि पुनरीदृशं त्वामैक्ष्वाको रामभद्रः पश्येत् । १ । २ ।
यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत् । ३ ।

लवः। आर्य्य(१) सुजनः स राजर्षिः श्रूयते। सलज्जमिव।

वयमपि न खल्वेवंप्राया: क्रतुप्रतिघातिनः (२)

क इह च (३) गुणैस्तं राजानं न वा बहु मन्यते।

तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां

विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाकरोत् (क)॥

चन्द्रकेतुः। सस्मितम्। किन्नु (४) भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः (ख)।

लवः। अस्त्विहामर्षो (५) मा भूद्वा एतत्तु पृच्छामि दान्तं हि राजानं राघवं (६) शृणुमः स किल नात्मना दृप्यति नाप्यस्य प्रजासु दृप्तत्वं जायते (७) तत् किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति (८) (ग)।

(क) वयमपि वयं हि न खलु एवंप्रायाः ईदृशाः क्रतुप्रतिघातिनः यज्ञविघ्नकारिणः आश्वमेधिकस्याश्वस्य निरोधनात् भयानस्मान् मखद्विषो मन्यते वस्तुतस्तु न वयं तथाविधाः इह अस्मिन् जगति च कः वा गुणैः शौर्य्यसौजन्यगाम्भीर्य्यादिभिः तं राजानं रामं न बहु मन्यते आद्रियते न वयं क्रतुद्वेषिणः नापि रामद्वेषिण इत्यर्थः तदपि तथापि खलु तुरङ्गमरक्षिणाम् अश्वरक्षकाणां स व्याहारः अयमश्वः पताकेयमित्याद्युक्तिः अखिलानां सर्व्वेषां क्षत्राणां क्षत्रियाणाम् आक्षेपेण न्यक्कारेण हेतुना प्रचण्डतया दुःसहतया मे मम विकृतिं क्षोभम् अकरोत् जनयामास अयमेवाश्वनिरोधहेतुरित्यर्थः।

(ख) अमर्षः असहिष्णुता।

(ग) दान्तं निरहङ्कारम्। आत्मना स्वयम्। मनुष्याः जनाः भृत्या इति यावत्

(१) मन्ये। १। मान्य। २। आर्य्य। ३।

(२) क्रतुष्वपि मत्सराः। १। २।
क्रतुप्रतिघातिनः। ३।

(३) क इह च। १। २। क इव च। ३।

(४) किन्नु। १। किम्। २। ३।

(५) अस्त्वमर्षः। १। २।
अस्त्विहामर्ष। ३।

(६) राघव राजानम्। १। २।
राजानं राघवम्। ३।

(७) नास्य प्रजा ईदृश्यो जायन्ते। १।
नाप्यस्य प्रजा ईदृश्यो जायन्ते।२।
नास्य प्रजासु दृप्तत्वं जायते। ३।

(८) वाचं वदन्ति। १। २।
वाचमुदीरयन्ति। ३।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्व्ववैराणां सा हि लोकस्य निर्ऋतिः (क)॥
इतिह स्म तां निन्दन्ति। अथेतरामभिष्टुवन्ति

कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्त्तिं सूते दुष्कृतं या हिनस्ति।
ताञ्चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः (ख)॥

सुमन्त्रः। परिपूत (१) स्वभावोऽयं कुमारः प्राचेतसान्ते-वासी वदत्ययमभिसम्पन्नमार्षेण संस्कारेण (२) (ग)।

लवः। यत् पुनश्चन्द्रकेतो वदसि किन्नु भवतस्तातप्रतापो-त्कर्षेऽप्यमर्ष इति तत् पृच्छामि किं व्यवस्थितविषयाः क्षत्रधर्म्मा इति (घ)।

(क) निर्ऋतिः अलक्ष्मीः।

(ख) विप्रकर्षति निराकरोति। मातरं मङ्गलानाम्— मङ्गलानां कल्याणानां मातरं प्रसवित्रीम् सर्व्वमङ्गलनिदानभूतामित्यर्थः। धेनुं कामधेनुरूपाम्।

(ग) वदत्ययमभिसम्पन्नमार्षेण संस्कारेण— ऋषीणामयम् आर्षः तादृशेन संस्कारेण ज्ञानालोकेन अभिसम्पन्नम् अनुगतं यथा तथा वदति।

(घ) किंव्यवस्थितविषयाः क्षत्रधर्म्माः— क्षत्राणां क्षत्रियाणां धर्म्माः शौर्य्यादयः व्यवस्थितः नियमितः विषयः वृत्तिर्येषां ते तादृशाः किम् नहि क्षत्रधर्म्माः व्यक्तिविशेषनिष्ठत्वेन नियमिताः न केवलं राम एव क्षत्रधर्म्माणा-मेकाधारः अन्यत्रापि ते सम्भवन्तीत्यर्थः।

(१) परिपूत।१।२। अपरिपूत।३। (२) वदति।१।२। वदत्ययम्।१।

चन्द्रकेतुः । नैव खलु जानासि देवमैक्ष्वाकम्(१) तद्विरम विरमातिप्रसङ्गात् (२) ।

सैनिकानां प्रमाथेन (३) सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने नातिनिर्वक्तुमर्हसि (४) (क) ॥

लवः । सहासम् । आर्य्य जामदग्न्यस्य(५) दमनः स राजेति कोऽयमुच्चैर्वादः (ख)

सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां
बाह्वोर्वीर्य्यं यत्तु तत् क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन् दान्ते का स्तुतिस्तस्य राज्ञः (ग) ॥

चन्द्रकेतुः । सोन्माथमिव । आर्य्य आर्य्य कृतमुत्तरोत्तरेण (घ)

(क) ओजायितम् ओजस्विना भूतम् ओजस्विता प्रदर्शितेत्यर्थः । दमने विजेतरि । अतिनिर्वक्तुम् औद्धत्येन कथयितुम् ।

(ख) उच्चैर्वादः महती कथा ।

(ग) सिद्धं सर्व्वजनप्रसिद्धम् । दान्ते विजिते ।

(घ) कृतमुत्तरोत्तरेण— उत्तरोत्तरेण उत्तरोत्तरवाक्प्रपञ्चेन कृतम् अलम् । रामाधिक्षेपं श्रुत्वा किमपि विवक्षुः सुमन्त्रं प्रत्युक्तिरियम् ।

(१) तं देवमैक्ष्वाकं यदेवं वदसि ।१।२।
देवमैक्ष्वाकम् । ३ ।
(२) तद्विरम्यताम् ।१।२।
तद्विरम विरम । ३ ।
(३) सैनिकानां प्रमाथेन ।१।२।
रामेऽप्यस्मत्प्रमाथेन । ३ ।
(४) नैवं निर्वक्तुम् ।१।२।
नातिनिर्वक्तुम् । ३ ।
(५) जामदग्न्यस्यापि ।१।२।
जामदग्न्यस्य । ३ ।

कोऽप्येष सम्प्रति नवः पुरुषावतारः
श्लाघ्यो (१) न यस्य भगवान् भृगुनन्दनोऽपि ।
पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितानि च (२) यो न वेद (क) ॥

लवः । को हि रघुपतेश्चरितं महिमानञ्च न जानाति यदि नाम किञ्चिद्वक्तव्यमस्ति अथवा शान्तम् (ख)

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते (३)
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यपराङ्मुखाण्यपि (४) पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने(५) तत्राप्यभिज्ञो जनः (ग) ॥

(क) पर्याप्तसप्तभुवनाभयदक्षिणानि— पर्याप्ता सम्पन्ना सप्तानां भुवनानां लोकानाम् अभयदक्षिणा अभयदानं येभ्यः तानि ।

(ख) यदि नाम यदि तु किञ्चित् किमपि वक्तव्यम् अस्ति भवति । अथवा शान्तम् न किञ्चिद्वक्तुमुचितमित्यर्थः ।

(ग) वृद्धाः प्रवयसः ते रामादयः विचारणीयं सदसद्वेति विवेच्यं चरितं येषां ते तादृशाः न भवन्ति वृद्धानां चरितं सदसद्वा भवतु नास्मादृशां विचारयोग्यमित्यर्थः तिष्ठन्तु ते वर्त्तन्ताम् किं वर्ण्यते तेषां चरिते वर्णनार्हं न किमप्यस्तीत्यर्थः हि यतः ते सुन्दस्य रक्षोविशेषस्य स्त्रियाः ताड़कायाः दमने निधने अपि स्त्रीवधेऽपीत्यर्थः लोके अखण्डं समग्रं यशः येषां ते तथाविधाः महान्तः जाता इति शेषः खरायोधने खरेण तदाख्येन रावणानुचरेण सह संग्रामे यानि

---

(१) वीरः ।१।२। श्लाघ्यः । ३ ।
(२) पुण्यानि तातचरितानि च ।१।२।
तातस्य किञ्च चरितान्यपि । ३ ।
(३) कुं वर्त्तते ।१।२।
किं वर्ण्यते । ३ ।
(४) अकुतोभयानि । १ । २ ।
अपराङ्मुखाणि । ३ ।
(५) निधने । १ । दमने । २ । ३ ।

चन्द्रकेतुः। आस्तातापवादभिन्नमर्य्याद अति हि(१) नाम प्रगल्भसे (क)।

लवः। आः कथं (२) मय्येव भ्रुकुटीधरः संवृत्तः।

सुमन्त्रः। स्फुरितमनयोः क्रोधेन (ख) तथाहि

चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः,
किञ्चित् कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः।
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्रां भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च (ग)॥

त्रीणि अपराङ्मुखाणि अविचलितानि पदानि आसन् खरेणाभिद्रुतो रामः पृष्ठतस्त्रीणि पदान्यपससार यथा रामायणम्

विकलः स कृतो वाणैः खरो रामेण संयुगे।
मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतम्॥ ३। ३०। २२॥
तमापतन्तं संक्रुद्धं कृतास्त्रो रुधिराप्लुतम्।
अपासर्पद्द्वित्रिपदं किञ्चित्त्वरितविक्रमः॥ ३। ३०। २३॥

अपराङ्मुखाणीति सोपहासोक्तिः वा अथवा इन्द्रसूनोः वालिनः निधने वधे यत् कौशल सुग्रीवेण सह युध्यमानस्य तस्य वत्तसि प्रच्छन्नशरक्षेपरूपम् जनः लोकः तत्रापि तेष्वपि अभिज्ञः एतत् सर्व्वं सर्व्वजनप्रसिद्धमिति न तद्वर्णनायां प्रयोजनमस्तीति भावः।

(क) तातापवादभिन्नमर्य्याद— तातस्य रामस्य अपवादेन अधिक्षेपेण भिन्ना लङ्घिता मर्य्यादा सदाचारक्रमः येन सः तत्सम्बोधनम्।

(ख) स्फुरितम् उद्दीप्तम्।

(ग) आकूतं विपक्षदमनाभिप्रायः तन्निबन्धनः कोपावेश इति यावत् तज्जनितः वेपथुः कम्पः चूडामण्डलस्य शिखासमूहस्य बन्धनं बद्धं शिखामण्डलमित्यर्थः तरलयति चालयति स्वयं स्वभावतः कोकनदच्छदस्य रक्तोत्पलदलस्य किञ्चित्

(१) अस्ति। १। अतिहि। २। ३। (२) अये। १। २। आः कथम्। ३।

कुमारौ । तदितो विमर्द्दक्षमां भूमिमवतराव: (क) ।

इति निष्क्रान्ताः सर्व्वे । ×

कुमारविक्रमो नाम

पञ्चमोऽङ्कः ।

सद्दशे प्रकत्यैव आलोहिते इत्यर्थः नेत्रे रज्यतः क्रोधोदयात् सम्यक् लोहिते भवतः वक्त्रं मुखम् अकाण्डे अकस्मात् ताण्डवितयोः परिचलितयोः भ्रुवोः भङ्गेन चलनेन उत्कटं व्यक्तं लक्ष्यमाणं लाञ्छनं कलङ्कः यस्य तादृशस्य चन्द्रस्य उत् उपरि भ्रान्तः भ्राम्यन् भृङ्गः भ्रमरः यस्य तादृशस्य कमलस्य पद्मस्य च कान्तिं श्रियं सादृश्यमिति यावत् धत्ते धारयति तद्वदवभासते इत्यर्थः ।

(क) विमर्द्दक्षमां रणक्रियायोग्याम् ।

# षष्ठोऽङ्कः ।

---

ततः प्रविशति विमानेनोज्ज्वलेन (१) विद्याधरमिथुनम् ।

विद्याधरः । अहो खलु(२) अनयोर्विकर्त्तनकुलकुमारयोः अकाण्डप्रचण्डकलहयोः (३) उद्द्योतितक्षात्त्रलक्ष्मीकयोः (४) अद्भुतोद्भ्रान्त (५) देवासुराणि विक्रान्तचरितानि (क) । तथाहि प्रिये पश्य पश्य

भनभ्कनितकङ्कणक्वणितकिङ्किणीकं धनु-
र्ध्वनद्गुरु गुणाटनीकृतकरालकोलाहलम् ।

(क) अकाण्डप्रचण्डकलहयोः— अकाण्डः आकस्मिकः प्रचण्डः भीषणः कलहः विरोधः ययोः सहसैव भयावहे रणव्यापारे प्रवृत्तयोरित्यर्थः । उद्द्योतितक्षात्त्रलक्ष्मीकयोः— उद्द्योतिता उद्दीपिता क्षात्त्रलक्ष्मीः क्षात्त्रतेजः ययोः तादृशयोः । अद्भुतोद्भ्रान्तदेवासुराणि— अद्भुतेन विस्मयेन उद्भ्रान्ताः विमूढाः देवा असुराश्च येभ्यः तानि यान्यवलोकयन्तो देवा असुराश्च विस्मयस्तिमिता अभवन्नित्यर्थः । विक्रान्तचरितानि— विक्रान्तानि विक्रमपरिचायकानि चरितानि कार्य्याणि ।

---

(१) विमानोज्ज्वलम् । १ । २ ।
विमानेनोज्ज्वलेन । ३ ।
(२) अहो नु खलु भोः । १ ।
अहो खलु । २ । ३ ।
(३) अकाण्डकलहकरणप्रचण्डयोः ।१।
अकाण्डकलहप्रचण्डयोः । २ ।
अकाण्डप्रचण्डकलहयोः । ३ ।
(४) उद्द्योतितक्षात्त्रलक्ष्मीकाणि।१।२।
उद्द्योतितक्षात्त्रलक्ष्मीकयोः । ३ ।
(५) अद्भुत । १ । २ । अत्यद्भुत । ३ ।

वितत्य किरतोः शरानविरतस्फुरच्चूडयो-
र्विचित्रमभिवर्द्धते भुवनभीममायोधनम् (१) (क) ॥
विजृम्भितञ्च दिव्यस्य (२) मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवामन्द्रं दुन्दुभेर्दुन्दुमायितम् (ख) ॥

तत् प्रवर्त्त्यताम् (३) अनयोः प्रवीरयोरनवरतम् अविरल-ललित (४) विकचकनककमलकमनीयसन्ततिः (५) अमरतरु-तरुणमणिमुकुल (६) निकरमकरन्दसुन्दरः पुष्पनिपातः(ग) ।

(क) झनज्झनितानि झनज्झनेतिशब्दवन्ति यानि कङ्कणानि करभूषणानि तद्वत् क्वणिताः शब्दायमानाः किङ्किण्यः क्षुद्रघण्टिकाः यस्मिन् तत् गुरु उत्कटं यथा तथा ध्वनत् शब्दायमानम् गुणाटनीभ्यां मौर्व्वीधनुष्कोटिभ्यां कृतः करालः विशालः कोलाहलः कलकलः यस्य तत् तादृशं धनुः वितत्य आततज्यं कृत्वा शरान् वाणान् किरतोः निक्षिपतोः अविरतं अविश्रान्तं स्फुरन्त्यः प्रचलन्त्यः चूडाः शिखाः ययोः तादृशयोः अनयोः भुवनभीमं सर्व्वलोकभयावहं विचित्रम् अद्भुतम् आयोधनं युद्धम् अभिवर्द्धते उत्तरोत्तरं प्रवलीभवति।

(ख) द्वयोरपि अनयोः मङ्गलाय हिताय समरागपरिवर्द्धनायेति यावत् स्तनयित्नोः मेघस्य इव आमन्द्रम् अतिगम्भीरं दिव्यस्य देवलोकीयस्य दुन्दुभेः भेर्य्याः दुन्दुमायितं दुन्दुमेतिशब्दायितं विजृम्भितम् आविर्भूतञ्च ।

(ग) अविरलेत्यादि - अविरलैः घनसन्निविष्टैः ललितैः सुन्दरैः विकचैः स्फुटितैः कनककमलैः काञ्चनपद्मैः कमनीया नयनसुभगा सन्ततिः परम्परा यस्य सः तादृशः। अमरतर्व्वित्यादि— अमरतरूणां मन्दारपारिजातादिदेव-तरूणां तरुणस्य अचिरप्ररूढस्य मणिमुकुलनिकरस्य मणिमयस्य कुड्मलसमूहस्य मकरन्देन रसेन सुन्दरः प्राणतर्पणः ।

---

(१) भुवनभीमम् ।१।२। भुवनचित्रम् ।३।
(२) दिव्यास्त्रम् । १ । दिव्यस्य । २ ।
दिव्यास्त्र । ३ ।
(३) प्रवर्त्ततात् । १ । प्रवर्त्त्यताम् ।२।३।
(४) ललित । १ । २ । ३ ।
(५) कनकमयकमलकमनीयसंहतिः।१।२।
कनककमलकमनीयसन्ततिः । ३ ।
(६) मुकुल । १ । २ । मणिमुकुल । ३ ।

विद्याधरी । ता किंत्ति उण अआण्डविप्फुरिद (१) तडिच्छड़ाकड़ारं विअ (२) अम्बरं झत्ति संवुत्तं (क) ।

विद्याधरः । तत् किन्नु खल्वद्य

त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः (ख) ॥

विचिन्त्य । आं ज्ञातं वत्सेन चन्द्रकेतुना प्रयुक्तमस्त्रमाग्नेयं तस्यायमग्निच्छटासम्पातः(३) (ग) । सम्प्रति हि

अवदग्धकर्व्वुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः ।

(क) तत् किमिति अकाण्डविस्फुरिततडिच्छटाकडारम् इव अम्बरं झटिति संवृत्तम् ।

अकाण्डविस्फुरिततडिच्छटाकडारम्— अकाण्डे सहसा विस्फुरितया प्रादुर्भूतया तडिच्छटया विद्युत्परम्परया कडारं पिङ्गलवर्णम् ।

(ख) त्वष्टुः विश्वकर्म्मणः इदं त्वाष्ट्रं त्वाष्ट्रस्य यन्त्रस्य शाणादिरूपस्य भ्रमिभिः भ्रान्तस्य सञ्जातभ्रमणस्य त्वष्ट्रा यन्त्रोल्लिखितस्येत्यर्थः मार्त्तण्डस्य सूर्य्यस्य ज्योतिः इव उज्ज्वलः उद्दीप्तः ललाटस्थस्य नीललोहितचक्षुषः तृतीयस्य हरनेत्रस्य पुटयोः आवरणयोः भेदः, विघटनं नयनस्योन्मीलनमित्यर्थः सोऽद्य आपतितः किन्नु संहारमूर्त्तिमाश्रित्य हरेण किं जगद्दाहाय तृतीयं नेत्रमुन्मीलितमित्यर्थः ।

(ग) अग्निच्छटासम्पातः— अग्निच्छटायाः आग्नेयास्त्रवर्त्तितस्य अग्निरायेः सम्पातः सर्व्वतः प्रसरणम् ।

(१) अआण्डतण्डविड्डुण्डतरलित । १ । २ ।
अआण्डविप्फुरिद । ३ ।
(२) तड़िच्छड़ाकड़ारं । १ । २ ।
तड़िच्छड़ाकड़ारं विअ । ३ ।
(३) यस्यायमग्निच्छटासम्पातः । १ । २ ।
तस्यायमग्निच्छटासंघातः । ३ ।

दधति ध्वजाङ्कुश (१) पटाञ्चलेष्विमाः
घनकुङ्कुमच्छुरणविभ्रमं शिखाः (क) ॥

आश्चर्य्यम् प्रवृत्त (२) एवायम् उद्दण्डवज्रखण्डावस्फोटपटुतर-स्फुलिङ्गविकृतिः (३) उत्तालतुमुललेलिहानज्वालासम्भारभैरवो भगवान् उषर्बुधः (ख) प्रचण्डश्चास्य सर्व्वतः सन्तापः तत् प्रियामङ्गेनाच्छाद्य दूरमपसरामि ।

इति तथा करोति ।

विद्याधरी । दिट्ठिआ एदेण विमलमोत्तिअसर (४) सीदलमसिणमंसलेण (५) णाहदेहप्फंसेण आणन्दमन्दमउ-लिदघुम्मन्तलोअणाए अन्तरिदो एव्व सन्दावो (ग) ।

(क) अवदग्धाः ईषत् प्लुष्टाः अत एव कर्बुरिताः शबलिताः विविधवर्णा इत्यर्थः केतवः ध्वजाः चामराणि च येषां तादृशैः विमानमण्डलैः व्योमयान-निकरैः अपयातं पलायितमेव इमाः शिखाः अर्च्चिषः ध्वजाङ्कुशपटानां ध्वज-दण्डांशुकानाम् अञ्चलेषु प्रान्तेषु घनां कुङ्कुमेन लोहितचन्दनेन यत् छुरणं रञ्जनं तस्य विभ्रमं शोभां सादृश्यमिति यावत् दधति धारयन्ति अथवा तस्य विभ्रमं भ्रान्तिं दधति जनयन्ति ।

(ख) उद्दण्डः अतिभीषणः यः वज्रखण्डस्य अवस्फोटः आविर्भावः तद्वत् पटुतरा अतिविपुला स्फुलिङ्गानां विकृतिः सञ्चारः यस्य सः तादृशः उत्तालेन उन्नतेन तुमुलेन सङ्कुलेन लेलिहानेन उद्गतमुत्सर्पता ज्वालासम्भारेण शिखा-सन्तानेन भैरवः भयावहः अयं भगवान् उषर्बुधः वह्निः प्रवृत्तः सञ्चरितः एव ।

(ग) दिष्ट्या एतेन विमलमौक्तिकसरशीतलमसृणमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णल्लोचनायाः अन्तरितः एव सन्तापः ।

---

(१) ध्वजाङ्कुश । १ । २ । ध्वजांशुक । ३ ।
(२) प्रवृत्तः । १ । २ । प्रवर्त्तितः । ३ ।
(३) पटुरवस्फुलिङ्गगुरुः । १ । पटुरुत्सर्पिस्फुलिङ्गगुरुः । २ । पटुतरस्फुलिङ्गविकृतिः । ३ ।
(४) मोत्ताफल । १ । मोत्तिअफल । २ । मोत्तिअसर । ३ ।
(५) सिसिरमसिणसोवाणमंसलेण । १ । २ । मसिणमंसलेण । ३ ।

विद्याधरः । अयि किमत्र मया कृतम् । अथवा

अकिञ्चिदपि कुर्व्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥

विद्याधरी । कहं अविरलविलोलघुम्मन्तविज्जुल्लदाविलास-मण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं (क) ।

विद्याधरः । अयि (१) कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वेषः (२) कथम् अविरलप्रवृत्त (३) वारिधारासहस्र (४) सम्पातैः प्रशान्तमेव (५) पावकास्त्रम् ।

विद्याधरी । पिअं मे (६) (ख) ।

विद्याधरः । हन्त हन्त (७) सर्व्वमतिमात्रं दोषाय यत् प्रबलधारावलिक्षोभगम्भीरगुनगुनायमानमेघमेदुरान्ध-

विमलमौक्तिकसरशीतलमसृणमांसलेन— विमलः यः मौक्तिकसरः मुक्तामयी हारयष्टिः तद्वत् शीतलः मसृणः स्निग्धः मांसलः प्रभूतः सर्व्वाङ्गव्यापीति यावत् तेन । आनन्दमन्दमुकुलितघूर्णल्लोचनायाः— आनन्देन स्पर्शसुखेन मन्दम् ईषत् मुकुलिते निमीलिते घूर्णन्ती च लोचने यस्याः सा तथोक्तायाः ।

(क) कथम् अविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैः मत्तमयूरकण्ठश्यामलैः अवस्तीर्य्यते नभस्तलं जलधरैः ।

अविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैः— अविरलं सान्द्रं विलोलम् अतिचपलं च यथा तथा घूर्णन्त्यः समन्तात् प्रसर्पन्त्यः याः विद्युल्लताः तासां विलासेन स्फुरणेन मण्डितैः अलङ्कृतैः ।

(ख) प्रियं मे ।

(१) हन्त हन्त । १ । २ । अयि ३ ।
(२) खल्वयम् । १ । २ । खल्वेषः । ३ ।
(३) प्रयुक्त । १ । २ । प्रवृत्त । ३ ।
(४) वारिधारा । १ । २ । वारिधारासहस्र । ३ ।
(५) प्रशान्तम् । १ । २ । प्रशान्तमेव । ३ ।
(६) पिअं मे पिअं मे । १ । २ । पिअं मे । ३ ।
(७) हन्त हन्त भो भोः । १ । २ । हन्त हन्त । ३ ।

कारनीरन्ध्रनिरुद्धम्(१) एकवारविश्वग्रसनविकचविकरालकाल-कण्ठकण्ठ (२) कन्दरविवर्त्तमानमिव युगान्तयोगनिद्रा (३) निरुद्धसर्व्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते (क)। साधु वत्स चन्द्रकेतो साधु स्थाने वायव्यास्त्रमीरितम् यतः

विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्त्तानां क्वापि विप्रलयः कृतः (ख)॥

विद्याधरी। णाह को दाणीं एसो ससम्भमुक्खित्तकर-ब्भमिदपट्टकञ्चलो (४). दूरदो एव्व मङ्गरवअणपडिसिद्धजुज्झ-वावारो एदाणं कुमाराणं मज्झे(५) विमाणं(६) ओदरावेदि(ग)।

(क) प्रबलया वातावल्या वायुराशिना जनितात् क्षोभात् विकारात् गम्भीरं यथा तथा गुनगुनायमानैः गर्ज्जद्भिः मेघैः मेदुरं सान्द्रीकृतं यत् अन्धकारं तस्मिन् नीरन्ध्रं निरवकाशं यथा तथा निरुद्धम् आवृतम् एकेनैव वारेण प्रयत्नेन विश्वग्रसनाय जगद्ग्रासाय विकचः उन्मीलितः यः कालकण्ठस्य नील-कण्ठस्य कण्ठकन्दरः सुखगह्वरं तस्मिन् विवर्त्तमानं चेष्टमानम् इव युगान्ते प्रलये या योगनिद्रा मनसो विषयान्तरव्यावृत्तिरूपा निद्रा तया निरुद्धानि निरुद्धीतानि सर्व्वाणि द्वाराणि विषयग्रहोपायभूतानि इन्द्रियाणि येन तादृशस्य नारायणस्य उदरे जठरे निविष्टं प्रविष्टम् इव भूतजातं प्राणिवर्गः प्रवेपते कम्पते।

(ख) विद्याकल्पेन तत्त्वज्ञानसदृशेन मरुता चन्द्रकेतुप्रयुक्तवायव्यास्त्रप्रवर्त्तितेन वायुना विवर्त्तानां मायाकार्य्याणां प्रपञ्चानां ब्रह्मणि इव लवप्रयुक्तवारुणास्त्र-प्रवर्त्तितानां भूयसाम् असंख्यानां मेघानां क्वापि विप्रलयः संहारः कृतः।

(ग) नाथ कः इदानीम् एषः ससम्भ्रमोत्क्षिप्तकरभ्रमितपट्टकाञ्चलः दूरतः

(१) निरुद्धम्। १। २। निरुद्धम्। ३।
(२) कालकण्ठमुख। १। २।
कालकण्ठकण्ठ ३।
(३) युगान्तयोगनिद्रा। १। २।
युगान्तनिद्रा। ३।
(४) ओत्तञ्चलो। १। २। पट्टकञ्चलो। ३।
(५) अन्तरेण। १। अन्तरम्मि। २। मज्झे। ३।
(६) विमाणवरं। १। २। विमाणं। ३।

विद्याधरः। दृष्ट्वा (१)। एष शम्बूकवधात् प्रतिनिवृत्तो रघुपतिः।

शब्दं महापुरुषसंविहितं निशम्य
तद्गौरवात् समुपसंहृतसम्प्रहारः।
शान्तो लवः प्रणत एव च चन्द्रकेतुः,
कल्याणमस्तु सुतसङ्गमनेन (२) राज्ञः (क)॥

तदितस्तावन्निर्गच्छावः (३)।

इति निष्क्रान्तौ।

विष्कम्भकः।

एव मधुरवचनप्रतिषिद्धयुद्धव्यापारः एतयोः कुमारयोः मध्ये विमानम् अवतारयति।

ससम्भ्रमोत्क्षिप्तकरभ्रमितपट्टकाञ्चलः— ससम्भ्रमं सावेगम् उत्क्षिप्तेन उन्नमितेन करेण हस्तेन भ्रमितः पट्टकस्य उत्तरासङ्गस्य अञ्चलः एकदेशः येन सः तादृशः।

(क) महापुरुषेण रामेण संविहितम् उदीरितं शब्दं युद्धाद्विरम्यतामित्येवंरूपं वाक्यं निशम्य श्रुत्वा तद्गौरवात् रामोदीरितप्रतिषेधवाक्यानुरोधात् समुपसंहृतः परिहृतः सम्प्रहारः संग्रामः येन सः समरव्यापाराद्विरत इत्यर्थः लवः शान्तः शममाश्रितः चन्द्रकेतुश्च प्रणतः प्रणामक्रियायां प्रवृत्तः एव अधुना सुतसङ्गमनेन पुत्रसमागमेन राज्ञः रामस्य कल्याणं शुभम् अस्तु भवतु।

---

(१) विद्याधरः। दृष्ट्वा। १।
विद्याधरः। २। ३।
(२) सुतसङ्गमनेन। १। २।
पुनरागमनेन। ३।
(३) तदितस्तावन्निर्गच्छावः। ३।
१।२ पुस्तकयोरयमंशः परिहृतः।

ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च ।

रामः । पुष्पकादवतरन् ।

दिनकरकुलचन्द्र चन्द्रकेतो
सरभसमेहि दृढं (१) परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः
शमसुपयातु ममापि चित्तदाहः (क) ॥

उत्थाप्य सस्नेहास्रं परिष्वज्य (२) । अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य (३) (ख) ।

चन्द्रकेतुः । कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन (४) तद्विज्ञापयामि मामिव विशेषेण वा मत्तः शिवेन चक्षुषा (५) पश्यत्वमुं महावीरप्रकाण्डं तातः (ग) ।

(क) सरभसम् -- रभसः हर्षः तेन सह यथा तथा । चित्तदाहः— चित्तस्य हृदयस्य दाहः सीताविरहनिबन्धनो निरतिशयः सन्तापः ।

(ख) दिव्यास्त्रधरदेहस्य— धरतीति धरः दिव्यानाम् अलौकिकानाम् अस्त्राणां धरः दिव्यास्त्रधरः तादृशः देहः यस्य तस्य तथाविधस्य अप्रमित-वीर्य्यैरस्त्रैरलङ्कृतकलेवरस्येत्यर्थः ।

(ग) शिवेन चक्षुषा प्रसन्नेन नयनेन । महावीरप्रकाण्डं महावीरप्ररोहं प्रशस्तं महावीरं वा ।

(१) दृढम् ।१।२। अदयम् ।३।

(२) चन्द्रकेतुः । अभिवादये

रामः । उत्थाप्य सस्नेहास्रं परि-ष्वज्य ।१।२।

उत्थाप्य सस्नेहास्रं परिष्वज्य ।३।

(३) तव दिव्यास्त्रधरदेहस्य ।१।२।

नूतनस्य दिव्यास्त्रदेहस्य ।३।

(४) लवस्याभ्युदयेन ।१।२।

लवस्य लाभाभ्युदयेन ।३।

(५) मामिवाविशेषेण मत्तः शिवतरेण चक्षुषा ।१।२।

मामिव विशेषेण वा मत्तः शिवेन चक्षुषा ।३।

रामः । लवं निरूप्य । दिष्ट्या अतिगम्भीराकृतिरयं (१) वयस्थो वत्सस्य (क) ।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्त्रो धर्म्मः श्रित इव तनुं ब्रह्मकोषस्य(२) गुप्त्यै ।
सामर्थ्यानामिव समुदयः सञ्चयो वा गुणानां-
माविर्भूय स्थित इव जगत्पुण्यनिर्म्माणराशिः (ख) ॥

लवः । अहो पुण्यानुभावदर्शनोऽयं महापुरुषः (ग)
आश्वासस्नेहभक्तीनामेकमालम्बनं महत् (३) ।
प्रकृष्टस्येव धर्म्मस्य प्रसादो मूर्त्तिसञ्चरः (घ) ॥

(क) अतिगम्भीराकृतिः— अतिगम्भीरा अतिशयेन दुरवगमा आकृतिः बहिराकारः हर्षविषादादिसूचको भ्रुकुटीमुखरागादिरिति यावत् यस्य सः तथोक्तः ।

(ख) लोकान् जगन्ति त्रातुं रक्षितुं कायवान् मूर्त्तिमान् परिणतः संवृत्तः कृतमूर्त्तिपरिग्रह इत्यर्थः अस्त्रवेदः धनुर्वेद इव ब्रह्मकोषस्य वेदरूपस्य रत्नागारस्य गुप्त्यै रक्षायै तनुं मूर्त्तिं श्रितः अधिष्ठितः मूर्त्तिमान् इत्यर्थः क्षात्त्रः धर्म्म इव सामर्थ्यानां वीर्य्यशौर्य्यादीनां समुदयः समवायः इव गुणानां दयादाक्षिण्यादीनां सञ्चयः समष्टिः इव जगतां पुण्यनिर्म्माणराशिः पुण्यरूपपदार्थपुञ्जः आविर्भूय मूर्त्तिमाश्रित्य स्थितः विद्यमानः इव ।

(ग) पुण्यानुभावदर्शनः— पुण्ये पवित्रे अनुभावदर्शने प्रभावावलोकने यस्य सः तथोक्तः ।

(घ) आलम्बनम् आश्रयः आयतनमिति यावत् । मूर्त्तिसञ्चरः— मूर्त्या कलेवरेण सञ्चरति भ्रमति मूर्त्तिमानित्यर्थः ।

---

(१) अतिकल्याणाकृतिरयम् । १ । २ ।
अतिगम्भीराकृतिरयम् । ३ ।
(२) ब्रह्मधौघस्य । १ । २ ।
ब्रह्मकोषस्य । ३ ।
(३) एकमालम्बनं महत् । १ । २ ।
एकमेवानुलम्बनम् । ३ ।

आश्चर्यम्

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन् दृष्टे किमिव (१) परवानस्मि यदिवा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः (क) ॥

रामः । तत् किमेकपद एव दुःखविश्रामं ददाति उपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम् अथवा स्नेहस्य निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत् (ख) तथाहि (२)

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।

(क) अस्मिन् महापुरुषे दृष्टे नयनविषयीभूते सति झटिति विरोधः विद्वेषः विश्रान्तः निवृत्तः निर्वृत्या प्रीत्या घनः सान्द्रः प्रीतिपूर्ण इति यावत् रसः अनुरागः प्रसरति प्रवर्त्तते तत् तादृशम् औद्धत्यं प्रागल्भ्यं क्वापि कुत्रापि व्रजति गच्छति प्रलीयते इत्यर्थः विनयः मां प्रह्वयति आनमयति किमिव कुतोऽपि निमित्तादिव परवान् पराधीनः अस्मि यदिवा अथवा तीर्थानां पुण्यक्षेत्राणाम् इव महतां महापुरुषाणां कोऽपि अनिर्व्वचनीयस्वरूपः महार्घः महनीयः अतिशयः महिमा ।

(ख) स्नेहस्य निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत् व्यपेक्षया अपेक्षया सह सव्यपेक्षः सापेक्षः निमित्तस्य कारणस्य सव्यपेक्षः निमित्तसव्यपेक्षः निमित्तापेक्षी स्नेहः निमित्तसव्यपेक्ष इत्येतत विप्रतिषिद्धं विरुद्धम् अप्रामाणिकमिति यावत् कस्यचित् कस्मिंश्चित स्नेहप्रवृत्तिरहेतुकैव न किमपि निमित्तमपेक्षते इत्यर्थः ।

(१) किमपि । १ । २ ।
किमिव । ३ ।

(२) विप्रतिषिद्धमेतत् । १ । २ ।
विप्रतिषिद्धमेतत् तथाहि । ३ ।

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः (क) ॥

लवः । चन्द्रकेतो क एते ।

चन्द्रकेतुः । प्रियवयस्य ननु तातपादाः (१) ।

लवः । ममापि तर्हि धर्म्मतस्तथैव यतः प्रियवयस्य इत्यात्थ किन्तु चत्वारः खलु भवतामेवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः तत् विशेषं ब्रूहि (ख) ।

चन्द्रकेतुः । ननु ज्येष्ठतातपादा इत्यवेहि ।

लवः । सोल्लासम् । कथं रघुनाथ (२) दिष्ट्या सुप्रभातमद्य यदयं दृष्टो देवः (३) । सविनयकौतुकं निर्वर्ण्य । तात प्राचेतसान्तेवासी लवोऽभिवादयते ।

रामः (४) । आयुष्मन् एह्येहि । सस्नेहमालिङ्ग्य (५) । अयि कृतं कृतमतिविनयेन अनेकवारमपरिश्लथं परिष्वजस्व (ग) ।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः ।
नन्दयति चन्द्रचन्दननिस्यन्दजडस्तव स्पर्शः (घ) ॥

(क) आन्तरः अन्तर्वर्त्ती कोऽपि हेतुः किमपि निमित्तं पदार्थान् वस्तूनि व्यतिषजति स्नेहसूत्रेण परस्परं सम्बध्नाति प्रीतयः स्नेहाः न खलु नैव बहिरुपाधीन् बाह्यधर्म्मान् संश्रयन्ते अवलम्बन्ते बाह्यधर्म्मानाश्रित्य न प्रवर्त्तन्ते इत्यर्थः ।

(ख) तथैव तातपादा एव । एवंव्यपदेशभागिनः तातसंज्ञाभाजनानि ।

(ग) अपरिश्लथं अशिथिलं गाढमित्यर्थः ।

(घ) परिणतं प्रस्फुटितम् अत एव कठोरं प्राप्तपूर्णावस्थं यत् पुष्करं कमलं

(१) तातपादा एते ।१।२। तातपादाः।३। (४) रामः । सस्नेहम् ।१।२। रामः ।३।
(२) रघुनाथ एव ।१।२। रघुनाथः ।३। (५) सस्नेहं परिष्वज्य । १ । २ ।
(३) देवो दृष्टः । १ । २ । दृष्टो देवः ।३। सस्नेहमालिङ्ग्य । ३ ।

लवः । स्वगतम् । ईदृशो माम्(१) प्रत्यमीषामकारणस्नेहः मया पुनरेभ्य एवाभिद्रुग्धमस्त्रेन(२) यदायुधपरिग्रहं यावदध्यारूढो(३) दुर्योगः। प्रकाशम् । मृष्यन्त्विदानीं लवस्य बालिशतां तातपादाः (क) ।

रामः । किमपराद्धं वत्सेन ।

चन्द्रकेतुः । अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन (४) (ख) ।

रामः । नन्वयमलङ्कारः क्षत्त्रस्य

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा(५) निकृत इव तेजांसि वमति (ग)॥

तस्य गर्भच्छदः अन्तर्वर्त्ति दल तद्वत् पीनः स्थूनः मसृणः स्निग्धः सुकुमारः कोमलश्च चन्द्रचन्दनयोः यः निस्यन्दः द्रवः तद्वत् जडः शीतलः स्पर्शः तवावयवसम्पर्कः नन्दयति प्रीणाति मामिति शेषः ।

(क) अभिद्रुग्धं वैरायितम् । अध्यारूढः प्रवृत्तः । दुर्योगः कलङ्कः । बालिशताम् अज्ञताम् अविमृश्यकारितामिति यावत् ।

(ख) वीरायितम् वीरवत् आचरितम् ।

(ग) प्रसृतं प्रदीप्तम् । प्रकृतिनियतत्वादकृतकः— प्रकृतिनियतत्वात् स्वभावसिद्धत्वात् अकृतकः अकृत्रिम । आग्नेयो ग्रावा अग्निसुहृमति आग्नेयः ग्रावा पाषाणः सूर्यकान्तमणिः । निकृतः परिभूतः ।

(१) अस्मादृशान् । १ । २ । माम् । ३ ।
(२) एभ्य एवाभिद्रुग्धमस्त्रेन । १ । २ ।
अत्यधिकमिव दुःश्रवमस्त्रेन । ३ ।
(३) अत्यारूढः । १।२। अध्यारूढः । ३।
(४) वीरायितम् । १ । २ ।
वैरायितम् । ३ ।
(५) आग्नेयो ग्रावा । १ । २ ।
आग्नेयग्रावा । ३ ।

चन्द्रकेतुः। अमर्षोऽप्यस्यैव (१) शोभते वीरस्य पश्यतु हि तातः (२) प्रियवयस्यविनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्व्वतः सैन्यानि।

रामः। विलोक्य (३)। वत्स लव संह्रियतामस्त्रम् (४)। त्वमपि चन्द्रकेतो निर्व्यापारविलक्षितानि साश्वय बलानि(क)।

लवः। यथाज्ञापयति तातः (५)।

इति प्रणिधानं नाटयति।

चन्द्रकेतुः। यथादिष्टम्।

इति निष्क्रान्तः।

लवः। प्रशान्तमस्त्रम्।

रामः। वत्स सरहस्यप्रयोगसंहरणान्यस्त्राणि आम्नायवन्ति (ख)।

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि॥

(क) व्यापारः चेष्टा तस्याभावः निर्व्यापारम् व्यापाररहित्यं तेन हेतुना विलक्षितानि लज्जितानि।

(ख) रहस्यं मन्त्रग्रामः तत्सहिते तेन नियमिते इत्यर्थः सरहस्ये प्रयोग संहरणे येषां तानि तथाविधानि अस्त्राणि आम्नायवन्ति सम्प्रदायसिद्धानि गुरूपदेशापेक्षीणीत्यर्थः गुरूपदेशं विना तादृशानामस्त्राणामधिगमो न सम्भवतीति भावः।

(१) तात अमर्षोऽप्यस्यैव। १।
तात अमर्षोऽप्यस्य। २।
अमर्षोऽप्यस्यैव। ३।

(२) पश्यन्तु हि तात।१। पश्यन्तु।२।
पश्यतु हि तातः। ३।

(३) रामः। विलोक्य।१।२। रामः।३।

(४) संह्रियन्तामस्त्राणि। १।२।
संह्रियतामस्त्रम्। ३।

(५) लवः। प्रणिधानं नाटयति।१।३।
लवः। यथाज्ञापयति तातः।
इति प्रणिधानं नाटयति। २।

अथैतन्मन्त्रपारायणोपनिषदं भगवान् कृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच स तु भगवान् मह्यमित्येष क्रमः (१) कुमारस्य तु कः(२) सम्प्रदाय इति पृच्छामि (क) ।

लवः । स्वतःप्रकाशान्यावयोरस्त्राणि ।

रामः । विचिन्त्य । किं न सम्भाव्यते कोऽपि प्रकृष्टपुण्यपरिपाकोपादानो(३) महिमा स्यात् । द्विवचनन्तु कथम् (ख) ।

लवः । भ्रातरावावां यमजौ ।

रामः । तर्हि (४) द्वितीयः कः ।

## नेपथ्ये

भाण्डायन भाण्डायन

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे तथेति ।

(क) एतन्मन्त्रपारायणोपनिषदम्— एतेषां मन्त्राणां पारायणं समग्रोपदेश. तद्रूपाम् उपनिषदं गुह्यविद्याम् । क्रमः सम्प्रदाय गुरुपारम्पर्य्यमिति यावत् ।

(ख) प्रकृष्टपुण्यपरिपाकोपादान.— प्रकृष्टानाम् विशिष्टानां पुण्यानां सुकृतानां परिपाकः फलोन्मुखीभावः सः उपादानं कारणं यस्य सः तथोक्तः विशिष्टपुण्यबलेनान्यथापि जृम्भकाणामधिगमः सम्भवतीत्यर्थः ।

(१) एष तु पूर्व्वानुक्रमः । १ । २ ।
एवं क्रमः । ३ ।
(२) कुमारस्य पुनः कुतः । १ । २ ।
कुमारस्य तु कः । ३ ।
(३) प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि । १ । २ ।
किं न सम्भाव्यते कोऽपि प्रकृष्टपुण्यपरिपाकोपादानः । ३ ।
(४) स तर्हि । १ । २ । तर्हि । ३ ।

अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु (क) ॥

रामः ।

अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम् ।
नवनीलनीरधरधीरगर्ज्जित
क्षणबद्धकुड्मलकदम्बडम्बरम् (ख) ॥

लवः । अयमसौ मम ज्यायान् आर्य्यः कुशो नाम भरताश्रमात् प्रतिनिवृत्तः ।

रामः । सकौतुकम् । वत्स इत आह्वयैनमायुष्मन्तम् (१) ।

लवः । एवम् ।

इति परिक्रामति ।

(क) ननु सखे किम् आयुष्मतः दीर्घायुषः लवस्य नरेन्द्रसैन्यैः राजबलैः आयोधनं युद्धम् आत्थ ब्रवीषि तथेति तथा सति आयोधनं प्रवृत्तं चेत् इत्यर्थः अद्य भुवनेषु जगत्सु अधिराजशब्दः सम्राट्संज्ञा अस्तं विलयम् एतु गच्छतु अद्य क्षत्रस्य क्षत्रियजातेः शस्त्रशिखिनः शस्त्राग्नयः शमं निर्व्वाणं यान्तु गच्छन्तु आवयो रणकर्म्मणेति शेषः ।

(ख) अथ इन्द्रमणिः इन्द्रनीलोपलः तद्वत् मेचका श्यामला छविः कान्तिः यस्य तादृशः कोऽयं ध्वनिना कण्ठरवेण एव दत्तपुलकं जनितरोमाञ्चं मां नवः नूतनः नीलः श्यामलः यः नीरधरः जलधरः तस्य धीरगर्ज्जितक्षणेन गभीरगर्ज्जनरूपेणोत्सवेन हेतुना बद्धा उद्भिन्नाः कुड्मलाः मुकुलाः यस्य तादृशस्य कदम्बतरोः डम्बरः सादृश्यं यस्मिन् तं तथाविधं करोति ।

(१) इतं एवाह्वयैनमप्यायुष्मन्तम् । १ । २ । इत आह्वयैनमायुष्मन्तम् । ३ ।

ततः प्रविशति कुशः ।

कुशः । साङ्गुतहर्षधैर्य्यं धनुरास्फालयन् (१) ।
दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वताद्‌ा मनो-
र्द्दप्तानां (२) दहनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्रास्त्र(३) स्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः (क) ॥

इति विकटं परिक्रामति (ख) ।

रामः । कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः (४) (ग)

(क) विवस्वतः सूर्य्यस्य अपत्यं पुमान् वैवस्वतः सप्तमो मनुः स च सूर्य्यवंशानां नृपतीनां प्रथमः भगवतः वैवस्वतात् मनोः आ भगवन्तं वैवस्वतं मनुमारभ्येत्यर्थः दत्ता इन्द्राय देवराजाय अभयदक्षिणा अभयदानम् असुरोपद्रवरूपविपत्प्रतीकारात्मकं यैः तथा दृप्तानां बलगर्व्वितानां दहनाय दाहाय दीपितः प्रज्वालितः निजः स्वीयः क्षत्रप्रतापाग्निः क्षत्रियप्रभावरूपः अनलः यैः तादृशैः आदित्यैः सूर्य्यवंश्यैः नृपतिभिः राजभिः यदि विग्रहः संग्रामः ततः तदा दीप्राणाम् उज्ज्वलानाम् अस्त्राणां स्फुरन्त्यः प्रसर्पन्त्यः याः उग्राः भयावहाः दीधितिशिखाः किरणार्च्चिषः ताभिः नीराजिता कृतनीराजना रञ्जिता इति यावत् ज्या शिञ्जिनी यस्य तथोक्तम् एतत् मम धनुः धन्यं सार्थकम् ।

(ख) विकटम् उद्धतम् ।

(ग) पौरुषातिरेकः पराक्रमातिशयः ।

(१) साङ्गुतहर्षधैर्य्यं धनुरास्फालयन् ।१।२। सहर्षाद्भुतधैर्य्यं धनुरास्फाल्य । ३ ।

(२) दृप्तानाम् ।१।२। दुष्टानाम् । ३ ।

(३) दिव्यास्त्र । १ । २ । दीप्रास्त्र । ३ ।

(४) कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः । १ । २ । कोऽप्ययं क्षत्रियपोतः पुरुषातिरेकः । ३ ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव (क)॥

लवः। उपसृत्य। जयति जयत्यार्य्यः (१)।

कुशः। नन्वायुष्मन् किमियं वार्त्ता युद्धमिति (२)।

लवः। यत्किञ्चिदेतत्। दृप्तभावमुत्सृज्य (३) आर्य्योऽस्मिन् विनयेन वर्त्तताम्।

कुशः। किमर्थम् (४)।

लवः। एष देवो (५) रघुपतिस्तिष्ठति स च स्निह्यत्यावयोः उत्कण्ठते च युष्मत्सन्निकर्षस्य।

कुशः। सतर्कम्। स रामायणकथानायको ब्रह्मकोषस्य(६) गोपायिता (ख)।

लवः। अथकिम्।

(क) अस्य क्षत्रियपोतस्य दृष्टिः विलोकनम् तृणीकृतः तृणवद्गणितः जगत्त्रयस्य त्रिभुवनस्य सत्त्वसारः बलप्रकर्षः यया तादृशी धीरा अनाकुला उद्धता दृप्ता च गतिः पदक्षेपः धरित्रीं पृथ्वीं नमयति इव कौमारके कुमारकाले अपि गिरिवत् पर्व्वतवत् गुरुतां सारवत्तां दधानः धारयन् अयं किं मूर्त्तिमान् वीरो रसः उत अथवा मूर्त्तिमान् दर्पः एव एति आगच्छति।

(ख) ब्रह्मकोषस्य गोपायिता— ब्रह्मकोषस्य वेदरूपरत्नागारस्य गोपायिता रक्षिता वेदविद्वेषिणां राक्षसानां दमनेनेत्यर्थः।

(१) जयत्यार्य्यः।१।२।
जयति जयत्यार्य्यः।३।
(२) युद्धं युद्धमिति।१।२। युद्धमिति।३।
(३) उद्धदृप्तभावम्।१।२।
दृप्तभावम्।३।
(४) किमर्थम्।१।२। किमिति।३।
(५) अत्र देवः।१।२। अत्र राजा।३।
(६) ब्रह्मघोषस्य।१।२। ब्रह्मकोषस्य।३।

कुशः। आशंसनीयपुण्यदर्शनः स महात्मा किन्तु कथमस्माभिरुपगन्तव्य इति न सम्प्रधारयामि (क)।

लवः। यथा गुरुस्तथोपचारेण।

कुशः। अयि (१) कथं नामैतत्।

लवः। अत्युदात्तसुजनश्चन्द्रकेतुरौर्म्मिलेयः प्रियवयस्य इति सख्येन मामुपतिष्ठते तेन तत्सम्बन्धेन (२) धर्म्मतात एवायं राजर्षिरिति (ख)।

कुशः। सम्प्रत्यवचनीयो (३) राजन्येऽपि प्रश्रयः (ग)।

लवः। पश्यत्वेनम् आकारानुभावगाम्भीर्य्यसम्भाव्यमानविविधलोकोत्तरचरितातिशयमार्य्यो महापुरुषम् (घ)।

कुशः। निर्वर्ण्य।

(क) आशंसनीयपुण्यदर्शनः— आशंसनीयं सर्व्वथा प्रार्थनीयं पुण्यं पवित्रं दर्शनं यस्य सः तादृशः।

(ख) अत्युदात्तसुजनः— अत्युदात्तः अतिमहात्मा सुजनः सज्जनश्च अथवा अत्युदात्तः अतिमहान् सुजनः सज्जनः सज्जनानामग्रगण्य इति यावत्। उपतिष्ठते उपचरति अनुगच्छतीत्यर्थः।

(ग) सम्प्रति अधुना राजन्ये क्षत्रिये अपि प्रश्रयः विनयः अवचनीयः अनिन्दनीयः संवृत्तः। ईदृशे क्षत्रिये प्रश्रयो न दोषायेत्यर्थः।

(घ) आकारेत्यादि— आकारेण सौम्यदर्शनतया अनुभावेन प्रभावेण गाम्भीर्य्येण अनभिज्ञैरविज्ञेयहृद्गतभावतया च सम्भाव्यमानः अनुमीयमानः विविधः अनेकविधः लोकोत्तरः लोकातिगः चरितातिशयः चरितोत्कर्षः यस्य तादृशम्।

(१) अपि। १। २। अयि। ३।
(२) तत्सम्बन्धेन च। १। २। तत्सम्बन्धेन। ३।
(३) सम्प्रति करणीयः। १। २। सम्प्रत्यवचनीयः। ३।

अहो प्रासादिकं (१) रूपमनुभावश्च पावनः ।
स्थाने रामायणकविर्देवीं वाचं व्यवीवृतत् (२) (क) ॥

उपसृत्य । तात प्राचेतसान्तेवासी कुशोऽभिवादयते ।

रामः । एह्येहि (३) आयुष्मन्

अम्बृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय (४) वात्सल्यादयमुत्कण्ठते जनः (ख) ॥

परिष्वज्य स्वगतम् । तत् किमपत्यमयं दारकः

अङ्गादङ्गात् स्रुत (५) इव निजो देहजः स्नेहसारः (६)
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेव ।

(क) अहो आश्चर्यम् अस्य महापुरुषस्य रूपम् आकृतिः प्रासादिकं प्रसाद-परिचायकम् प्रसादः विशुद्धिः अनुग्रहप्रवणता वा अतिशयेन विशुद्धचित्तः कृपालुहृदयो वायमित्यर्थः पावनः पवित्रः अनुभावः प्रभावश्च अतः रामायणस्य कविः प्रणेता वाल्मीकिः देवीं वाचं वाग्देवीं स्थाने सम्यक् व्यवीवृतत् विवर्त्तयामास काव्यरूपेण परिणतां चकारेत्यर्थः एतच्चरितमवलम्ब्य वाल्मीकेः काव्यप्रणयनप्रयासः सर्व्वथा सार्थक एवेति भावः ।

(ख) अयं जनः वात्सल्यात् स्नेहात् त्वां दृष्ट्वा स्नेहपरतन्त्रो भूत्वेत्यर्थः अम्बुना जलेन आध्मातः परिपूर्णः यः मेघः तद्वत् स्निग्धं मसृणं संहननं वपुः यस्य तादृशस्य सजलजलधरस्निग्धकलेवरस्येत्यर्थः ते तव परिष्वङ्गस्य आलिङ्गनस्य लाभायेत्यर्थः उत्कण्ठते उत्सुको भवति ।

(१) प्रामोदिकम् । १ । २ ।
प्रासादिकम् । ३ ।
(२) व्यवीवृणत् । १ । २ ।
व्यवीवृतत् । ३ ।
(३) एहि । १ । २ । एह्येहि । ३ ।
(४) परिष्वङ्गस्य । १ । २ ।
परिष्वङ्गाय । ३ ।
(५) च्युतः । १ । २ ।
स्रुतः । ३ ।
(६) निजः स्नेहजो देहसारः । १।२।३।

सान्द्रानन्दक्षुभितहृदयप्रस्रवेणेव सृष्टो (१)
गात्रं श्लेषे (२) यदमृतरसस्रोतसा सिञ्चतीव (क) ॥

लवः । तात (३) ललाटन्तपो घर्म्मदीधितिः तदत्र शाल-
च्छाये मुहूर्त्तमासनपरिग्रहं करोतु तातः (ख) ।

रामः । यदभिरुचितं वत्साय ।

इति सर्व्वे परिक्रम्योपविशन्ति ।

रामः । स्वगतम् ।

अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च (ग) ॥

(क) निजः स्वीय मदीय इत्यर्थः देहजः देहोत्पन्नः देहवर्त्तीति यावत् स्नेहस्य वात्सल्यस्य सारः निर्यासः अङ्गादङ्गात् सर्व्वेभ्यः अवयवेभ्यः स्रुतः क्षरितः इव मदीयः स्नेहसार एतद्दारकरूपेण परिणतः किम् इत्यर्थः चेतना-धातुः मदीयश्चैतन्यपदार्थः एव प्रादुर्भूय शरीराभ्यन्तरात् निःसृत्य बहिः स्थितः इव अयं मूर्त्तिमान् मदीयश्चैतन्यपदार्थ एवेत्यर्थः सान्द्रेण प्रगाढेन आनन्देन क्षुभितं द्रवीभूतं यत् हृदयं तस्य प्रस्रवेण क्षरणेन क्षरितेन हृदयद्रवेणेत्यर्थः सृष्टः निर्म्मितः इव अयं दारक इति शेषः यत् यतः अयं दारकः श्लेषे स्पर्शे अमृतस्रोतसा अतिप्रभूतया पीयूषधारया गात्रं वपुः सिञ्चति अभिवर्षति इव ।

(ख) ललाटन्तपः ललाटसन्तापकरः अतिप्रदीप्त इत्यर्थः । घर्म्मदीधितिः उष्णरश्मिः सूर्य्यः । शालच्छाये शालवृक्षस्य छायायाम् ।

(ग) अहो आश्चर्य्यम् प्रश्रयस्य विनयस्य योगे सम्बन्धे अपि अतिविनीतत्वे ऽपीत्यर्थः कुशस्य लवस्य च गतिस्थित्यासनादयः गमनावस्थानोपवेशनप्रभृतयः भावाः अवस्थाः साम्राज्यशंसिनः साम्राज्यप्राप्तिसूचकाः ।

(१) प्रस्नवेनावसृष्टः । १ । २ । शालाश्लेषे । ३ ।
प्रस्नवेनेव सृष्टः । ३ । (३) तात । १ । २ ।
(२) गात्रश्लेषे । १ । गात्रं श्लेषे । २ । तात तपति । ३ ।

वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत् केतयन्ति।
अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा
विकसितमिव पद्मं (१) विन्दवो माकरन्दाः (क)॥

भूयिष्ठाञ्च(२) रघुकुलकुमारच्छायामेतयोः (३) पश्यामि (ख)।

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसबन्धुरांसकम् (४)।
प्रसन्नसिंहस्तिमितञ्च वीक्षितम्
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः (ग)॥

(क) ते प्रसिद्धाः मनोज्ञाः मनोहारिणः रश्मयः ज्योतींषि अमलिनम् उज्ज्वलं रत्नम् इव मकरन्दस्य स्वरसस्य इमे माकरन्दाः विन्दवः विकसितं प्रस्फुटितं पद्मम् इव नास्ति विहितं विधानं यत्र इति यावत् यस्मिन् कर्म्मणि तत् यथा तथा सिद्धाः अयत्नसम्पन्नाः प्रकृतिसिद्धाः इत्यर्थः लक्ष्मीविलासाः शोभासम्पत्तयः प्रतिजनकमनीयं सर्व्वजनमनोहरं कान्तिमत् कान्तिपूर्णं वपुः कुशलवयोः शरीरं केतयन्ति अलङ्कुर्व्वन्ति एतदपि साम्राज्यशंसीति भावः।

(ख) रघुकुलकुमारच्छायाम् - रघुकुलोद्भूतानां कुमाराणां छायां सादृश्यम्।

(ग) वपुः शरीरं कठोरः पूर्णकायः यः पारावतः कपोतः तस्य कण्ठ इव मेचकं श्यामलम् तथा वृषस्य स्कन्धः इव स्कन्धौ भुजशिरसी यस्मिन् तत् तथोक्तम् तथा, सबन्धुराः अनुन्नतानताः सौष्ठवपूर्णाः इति यावत् अंशाः अवयवाः यस्य तत् तादृशम् सर्व्वावयववान् द्यमित्यर्थः वीक्षितं विलोकनं प्रसन्नस्य प्रशान्तस्य सिंहस्य इव स्तिमितं निश्चलम् ध्वनिः कण्ठरवश्च माङ्गल्यस्य मृदङ्गस्येव मांसलः गम्भीरः। माङ्गल्येति स्वरूपविशेषणम्।

(१) विकसितमरविन्दम्।१।३। विकसितमिव पद्मम्।२।
(२) भूयिष्ठम्।१।३। भूयिष्ठाम्।२।
(३) रघुकुमारच्छायामनयोः।१।२। रघुकुलकुमारच्छायामेतयोः।३।
(४) सबन्धुरांसयोः।१।३। सबन्धुरांसकम्।२।

सूक्ष्मं निरूप्य । अये न केवलमस्मात्(१) संवादिन्याकृतिः(क)

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः (ख) ॥

मुक्ताच्छदन्तच्छविसुन्दरीयं (२)
सैवौष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले
तथापि सौभाग्यगुणः स एव (ग) ॥

तदेतत् प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता इयं चानयोराकृतिर्वयसोः (३) यदपि स्वतःप्रकाशान्यस्त्राणीति तत्र विस्मयामि अपि न खलु तच्चित्रदर्शनप्रस्तावे (४) अस्त्राभ्यनुज्ञानमुक्तं स्यात् नह्यसाम्प्रदायिकान्यस्त्राणि पूर्व्वेषामप्यनु-

(क) अस्मत्संवादिनी अस्मदाकृतिसौसादृश्यशालिनी ।

(ख) अनुरूपं सौसादृश्यम् । नैपुणोन्नेयम् नैपुणेन प्रावीण्येन उन्नेयं परिमेयम् ।

(ग मुक्तावत् अच्छाः निर्म्मलाः ये दन्ताः तेषां या छविः कान्तिः तया सुन्दरी मनोहारिणी सा एव इयम् ओष्ठमुद्रा स च स एव कर्णपाशः नेत्रे पुनः नेत्रे तु यद्यपि रक्ते रक्तवर्णे नीले नीलवर्णे च, तथापि स एव सौभाग्यं नयनाह्लादकत्वं तद्रूपः गुणः वीरपुरुषाणां नेत्रे नीलिम्ना रक्तिम्ना च परिपूर्णे भवतः स्त्रीणान्तु न तथा ।

(१) अस्मदङ्ग । १ । २ । अस्मात् । ३ ।

(२) दन्तरेयम् । १ । २ ।
सुन्दरीयम् । ३ ।

(३) इयञ्चानयोराकृतिर्वपुश्च । १ । २ ।
इयञ्चानयोराकृतिर्वयसोः । ३ ।

(४) अपि खलु तच्चित्रदर्शनप्रासङ्गिकम् । १ । २ ।
अपि न खलु तच्चित्रदर्शनप्रस्तावे । ३ ।

शुश्रुम (१) अयञ्च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते (२) भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भभार (३) आसीत् (क)। सास्रम्।

पुरारूढे स्नेहे परिचयविकासादुपचिते
रहोविस्रब्धाया अपि सहजलज्जाजडदृशः ।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया (ख) ॥

(क) स्वतःप्रकाशान्यस्त्राणीति पूर्व्वं लवेनोक्तमिति शेषः (२०७पृ० ५प०)। विस्मयामि विविनच्मि। अस्त्राभ्यनुज्ञानं सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीत्येवंरूपम् (१८पृ० २प०)। नह्यसाम्प्रदायिकान्यस्त्राणि पूर्व्वेषामप्यनुशुश्रुम— सम्प्रदायो गुरुपरम्परा तं विना गुरूपदेशमन्तरेणेत्यर्थः लब्धानि असाम्प्रदायिकानि तादृशानि अस्त्राणि नहि पूर्व्वेषामपि अनुशुश्रुम पूर्व्वैरपि कैश्चित् गुरूपदेशं विना तादृशानि अस्त्राणि लब्धानीति न कदाचित् श्रुतमित्यर्थः। अयञ्च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते— अयम् अनुभूयमानः मे मम हृदयस्य चित्तस्य सुखातिशयः कुशलवयोरवलोकननिबन्धनः सुखसन्तानः संप्लवमानं व्याकुलीभवन्तम् आत्मानं विस्रम्भयते तवैवैतौ तनयाविति प्रत्यायनेन आश्वासयति। भूयिष्ठम् बहुशः। द्विधा प्रतिपन्नः द्वितयत्वेन परिज्ञातः।

(ख) पुरारूढे पूर्व्वसञ्जाते स्नेहे अनुरागे परिचयस्य दीर्घसाहचर्य्यस्य विकासात् प्रभावात् उपचिते वृद्धिं गते सति रहसि विजने विस्रब्धायाः रहस्यांशं न केनापि लक्षणीयेति विश्वस्तायाः अपि सहजया स्वाभाविक्या लज्जया जडे मन्थरे निर्व्यापारे इति यावत् दृशौ चक्षुषी यस्याः तथाविधायाः तस्याः गर्भग्रन्थिः गर्भभारः मयैव आदौ प्रथमं करतलेन परामर्शकलया संवाहनक्रियया द्विधा द्वितयतया ज्ञातः अनुभूतः तदनु तत्पश्चात् कैरपि कैश्चित् दिवसैः तया सीतया अपि।

---

(१) इति पूर्व्वेषामप्यनुशुश्रुम।१।५। (२) विप्रलभते।१।२। विस्रम्भयते।३। पूर्व्वेषामप्यनुसाम्प्रदायिकान्यनुशुश्रुम।३। (३) गर्भिणीभावः।१।२। गर्भभारः।३।

हरित्वा। तत् किमेतौ पृच्छामि केनाप्युपायेन (१)।

लवः। तात किमेतत् (२)।

बाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम्।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् (क)॥

कुशः। अयि वत्स

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं जगदिदमरण्यं (३) हि भवति।
स च स्नेहस्तावानयमपि वियोगो निरवधिः,
किमित्येवं पृच्छस्यनधिगतरामायण इव (ख)॥

रामः। स्वगतम्। अये तटस्थित आलापः कृतं प्रश्नेन। दग्धहृदय कोऽयमाकस्मिकस्ते (४) पारिप्लवो (५) विकारः। एवं (६) निर्भिन्नहृदयावेगः शिशुजनेन (७) अनुकम्पितोऽस्मि। भवतु तावदन्तरयामि। प्रकाशम्। वत्सौ रामायणमिति श्रूयते

(क) जगन्मङ्गलं विलोकितं सत् जगतां कल्याणकरम्। अवश्यायावसिक्तस्य— अवश्यायेन नीहारेण अवसिक्तस्य अभिषिक्तस्य।

(ख) तावान् तत्परिमाणः अतिमहान् इत्यर्थः। अयमपि अनधिगतरामायणः अनधीतरामायणः।

(१) पृच्छामि केनाप्युपायेन। १। २।
केनचिदुपायेन पृच्छामि। ३।

(२) तत् किमेतत्। १। २।
तात किमेतत्। ३।

(३) किम जगदरण्यम्। १। २।
जगदिदमरण्यम्। ३।

(४) आकस्मिकः। १।
आकस्मिकस्ते। २। ३।

(५) स्नेहपरिप्लवः।१।२। पारिप्लवः।३।

(६) एवम्। १। २। एवम्। ३।

(७) शिशुजनेनापि। १। २।
शिशुजनेन। ३।

भगवतो वाल्मीकेः सरस्वतीनिस्यन्दः प्रशस्तिरादित्यवंशस्य तत्र किञ्चित् कौतूहलेन (१) श्रोतुमिच्छामि (क) ।

कुशः । स कृत्स्न एव सन्दर्भोऽस्माभिराहत्तः (२) स्मृत्युपस्थितौ (३) तावदिमौ बालचरितस्यान्त्येऽध्याये श्लोकौ(४) (ख) ।

रामः । उदीरयतु वत्सः ।

कुशः ।

प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।
प्रियभावः स तु तया स्वगुणैरेव वर्द्धितः ॥
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥

(क) „तटस्थित आलापः कृतं प्रश्नेन— आलापः भ्रात्रोर्मिथोभाषणं, तटस्थितः उदासीनाभ्यामिव प्रवर्त्तितः अनेन संलापेन स्फुटं परिज्ञायते नैतौ सीतातनयाविति तथात्वे कुशः सीतादेव्या इत्यत्र अनन्या इत्येवाभिदध्यात् अतः प्रश्नेन एतन्मातापितृविषयिण्या इच्छया कृतम् अलम् अतः परं तादृशे प्रश्ने फलं नास्तीत्यर्थः । दग्धहृदय कोऽयमाकस्मिकस्ते पारिप्लवो विकारः— दग्धहृदय ते तव अयं कः आकस्मिकः अहेतुकः पारिप्लवः अधीरः अधैर्यपूर्णः इति यावत् विकारः वैक्लव्यम् अकस्मात् सीतायास्तनयावेताविति मत्वा किमिति मुधा विक्रियसे इत्यर्थः । निर्भिन्नहृदयावेगः – निर्भिन्नः आविर्भूतः हृदयावेगः चित्तवैक्लव्यं यस्य सः । अन्तरयामि आपतितं शोकावेगं विषयान्तरप्रसङ्गेन तिरोदधामि । सरस्वतीनिस्यन्दः वाङ्निर्यासः । प्रशस्तिः चरितकीर्त्तनम् ।

(ख) आहत्तः अभ्यस्तः । स्मृत्युपस्थितौ स्मृतिपथारूढौ । बालचरितस्य बालचरितात्मकस्य प्रथमस्य काण्डस्य ।

---

(१) कौतूहलेन यत्किञ्चित् । १ । २ । किञ्चित् कौतूहलेन । ३ ।
(२) अस्माकम् ।१।२। अस्माभिः । ३ ।
(३) स्मृतिप्रत्युपस्थितौ । १ । २ । स्मृत्युपस्थितौ । ३ ।
(४) द्वौ श्लोकौ । १ । २ । श्लोकौ । ३ ।

रामः । कष्टमतिदारुणोऽयं (१) हृदयमर्म्मोद्घातः (२) हा देवि (३) एवं किल तदासीत् । अहो निरन्वय(४) विपर्य्यासविरसवृत्तयो विप्रलम्भपर्य्यवसायिनस्तापयन्ति संसारवृत्तान्ताः (क) ।

क तावानानन्दो निरतिशयविस्रम्भबहुलः,
क तेऽन्योन्यं यत्नाः क्वचन गहना कौतुकरसाः ।
सुखे वा दुःखे वा क नु खलु तदैक्य हृदययो
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति (ख) ॥

भोः कष्टम्

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् (ग) ॥

(क) एवं किल तदासीत्— तदा बाल्ये एवं किल आसीत् तदानीमावयोः परस्परमीदृशः प्रीतियोग आसीदित्यर्थः । निरन्वयविपर्य्यासविरसवृत्तय— निरन्वयेण आकस्मिकेन विपर्य्यासेन दशान्तरापातेन विरसा वृत्तिः भावः येषां ते तथोक्ताः । विप्रलम्भपर्य्यवसायिनः— विप्रलम्भे शोके पर्य्यवस्यन्ति परिणमन्ति ते तथोक्ताः ।

(ख) निरतिशयविस्रम्भबहुलः— निरतिशयेन सर्व्वातिशायिना विस्रम्भेण प्रणयेन विश्वासेन वा बहुलः पूर्णः । गहनाः कौतुकरसाः— गहनाः सान्द्राः कौतुकेन रसाः उत्सवरसाः । प्राणः जीवितम् । पापः अधमः ।

(ग) प्रियायाः गुणसहस्राणाम् असंख्यानां गुणानाम् एकेन असाधारणेन उन्मीलनेन उदयेन पेशलः मनोहरः । दुःस्मरः स्मर्त्तुमशक्यः स्मरणेन निरतिशयक्लेशावह इत्यर्थः ।

(१) अतिदारुणः । १ । २ । अतिदारुणोऽयम् । ३ ।
(२) मर्म्मोपघातः । १ । २ । मर्म्मोद्घातः । ३ ।
(३) देवी । १ । २ । देवि । ३ ।
(४) निरन्वय । १ । २ । निरन्वयं । ३ ।

तदा किञ्चित् किञ्चित् कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनयुगलमासीन्मृगदृशः ।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धस्य वपुषि (क) ॥

कुशः । अयञ्च मन्दाकिनीचित्रकूटवनविहारे सीतादेवी-मुद्दिश्य रघुपतेः श्लोकः (ख)

त्वदर्थमिव विन्यस्तः शिलापट्टो(१) ऽयमग्रतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केशरः (ग) ॥

रामः । सलज्जास्मितस्नेहकरुणम्(२) । अति नाम मुग्धः

(क) तदा तस्मिन् काले मृगदृशः कुरङ्गनयनायाः प्रियायाः स्तनयुगलं किञ्चित् किञ्चित् कृतपदं क्रमेण किञ्चित् लब्धोदयं सत् कतिपयैः स्वल्पसंख्यैः अहोभिः दिनैः ईषद्विस्तारि स्तोकविस्तारवत् आसीत् यत्र यस्मिन् काले वयसः यौवनस्य स्नेहस्य [illegible]रस्परानुरागस्य आकूतस्य अभिप्रायस्य तत्तदभिलाषस्येति यावत् व्यतिकरेण समवायेन घनः सान्द्रः मदनः प्रगल्भः प्रौढः व्यापारः विकारः यस्य तादृशः सन् हृदि चित्ते मुग्धः मृदुः लज्जावशात्नातिप्रबलः इति यावत् तादृशस्य सन् वपुषि वहिराकारे स्फुरति आविर्भवति ।

(ख) मन्दाकिनीचित्रकूटवनविहारे – मन्दाकिनी नाम चित्रकूटसमीपवाहिनी काचिन्नदी मन्दाकिनी च चित्रकूटवनं च तयोः विहारः तस्मिन् मन्दाकिनीतीरचित्रकूटवनयोर्विहरणकाले इत्यर्थः ।

(ग) अग्रतः पुरतः अयं शिलापट्टः शिलाखण्डरूपमासनम् त्वदर्थं तवोपवेशनार्थम् इव विन्यस्तः आस्तीर्णः यस्य शिलापट्टस्य अभितः सर्वतः अयं केशरः वकुलपादपः पुष्पैः प्रवृष्टः सौरभसम्पादनार्थं कृतपुष्पवृष्टिः इव ।

(१) शिलापादः । १ । २ ।
शिलापट्टः । ३ ।

(२) सलज्जितस्नेहकरुणम् । १ । २ ।
सलज्जास्मितस्नेहकरुणम् । ३ ।

शिशुजनः (१) विशेषतस्त्वरण्यचरः । हा देवि स्मरसि तस्य प्रदेशस्य तत्समयविस्रम्भातिप्रसङ्ग(२) साक्षिणः (क) । कष्टं भोः कष्टम्

श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति ।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं मुखम् (ख) ॥

स्तम्भित इव स्थित्वा सकरुणम् । अहो नु खलु भोः

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे
कुकूलानां राशौ तदनु हृदयं पच्यत इव (ग) ॥१०॥

(क) तत्समयविस्रम्भातिप्रसङ्गसाक्षिणः— तस्मिन् समये ये विस्रम्भाः स्वच्छन्दविहाराः तेषाम् अतिप्रसङ्गः बाहुल्यं तस्य साक्षिणः साक्षिभूतस्य ।

(ख) श्रमाम्बुभिः श्रमजनितैर्जलैः घर्मोदकैरिति यावत् शिशिरीभवत् शीतलीभावमापद्यमानम् प्रसृतेन उच्छलितेन मन्देन मन्दाकिनीमरुता तरलितैः परिचालितैः अलकैः आकुला तिरोहिता ललाटरूपस्य चन्द्रस्य द्युतिः कान्तिः यस्मिन् तत् कुङ्कुमैः कलङ्कितौ रञ्जितौ तौ न भवत इति अकुङ्कुमकलङ्कितौ कुङ्कुमलेपरहितावित्यर्थः तथापि उज्ज्वलौ दीप्यमानौ कपोलौ गण्डौ यस्मिन् तत् निः नास्ति आभरणं यस्मिन् सः निराभरणः तथापि सुन्दरः मनोहरः यः श्रवणपाशः कर्णपाशः तेन सौम्यं नयनसुभगं मुखं तवेति शेषः उत्प्रेक्ष्यते मया स्मर्यते ।

(ग) चिरं दीर्घकालं ध्यात्वा ध्यात्वा एकतानेन मनसा सततं चिन्तयित्वा निर्मायेव सततचिन्तनोत्पादितविप्रलम्भमहिम्ना चित्रार्पितं कृत्वेव पुरतः

---

(१) अतिनामायं मुग्धः शिशुजनः । १ । २ । (२) विस्रम्भातिशयप्रसङ्ग । १ । २ । ३ ।
अतिनामायं सुखरः शिशुजनः । ३ ।

नेपथ्ये

वशिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजडाः (क) ॥

रामः । कथं भगवन्तावरुन्धतीवशिष्ठौ अम्बा जनकश्चात्रैव । कष्टं कथं (१) खल्वेते द्रष्टव्याः । सकरुणं विलोक्य । अहह तातजनकोऽप्यत्रैवायाति इति वज्रेण (२) ताडितोऽस्मि मन्दभाग्यः ।

सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वशिष्ठादिभि-
र्दृष्टापत्यविवाहमङ्गलमहे (३) तत्तातयोः सङ्गतम् ।

नयनयोरग्रतः निहितः स्थापितः प्रियजनः प्रवासे वियोगे अपि न खलु आश्वासं सान्त्वनां करोति करोत्येव विकल्पस्य तादृशस्य विप्रलम्भस्य व्युपरमे हि निवृत्तौ तु जगत् जीर्णारण्यं भवति जीर्णारण्यवत् असारं प्रतिभाति तदनु तत्पश्चात् हृदयं कुकूलानां तुषाग्नीनां राशौ पच्यते दह्यते इव निरतिशयं परितप्यते इत्यर्थः ।

(क) दशरथमहिष्यः कौशल्या एकत्वेऽपि गौरवाद्बहुवचनम् । शिशुकलहं लवचन्द्रकेतुविरोधम् । विदूराश्रमतया— विदूरः दूरवर्त्ती आश्रमः येषां ते विदूराश्रमाः तेषां भावः तया विप्रकृष्टाश्रमवर्त्तितयेत्यर्थः । श्रमजडाः श्रमाभिभूताः

(१) कथम् । १ । २ । कष्टं कथम् । ३ ।
(२) तातजनकस्तु दैवादत्रैवायाति इति वज्रेणैव । १ । २ । तातजनकोऽप्यत्रैवायाति इति वज्रेण । ३ ।
(३) जुष्टं वशिष्ठादिभिर्दृष्टापत्यविवाहमङ्गलमहो । १ । २ । जुष्टे वशिष्ठादिभिर्दृष्टापत्यविवाहमङ्गलमहे । ३ ।

पश्यन्नीदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्य्ये किं न सहस्रधाहमथवा रामेण किं दुष्करम् (क)॥

नेपथ्ये

कष्टं कष्टम्

अनुभावमात्रसमुपस्थितश्रियं
सहसैव वीक्ष्य रघुनाथमीदृशम्।
प्रथमप्रमूढजनकप्रबोधना-
द्विधुराः प्रमोहमुपयान्ति मातरः (ख)॥

रामः। हा तात हा मातरः हा जनक

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम्।
तस्मिन्नकरुणे (१) पापे वृथा वः करुणा मयि (ग)॥

(क) सम्बन्धस्य स्पृहणीयतया श्लाघ्यतया प्रमुदितैः प्रहृष्टैः वशिष्ठादिभिः जुष्टे अधिष्ठिते अपत्यविवाहमङ्गलमहे अपत्यविवाहकौतुकरूपे उत्सवे तातयोः पितृश्वशुरयोः तत् तादृशं सकृतं सौहार्द्दं दृष्ट्वा ईदृशे अतिघोरे महावैशसे महत्यनिष्टापाते वृत्ते संघटिते ईदृशं पितृसखं पितुः प्रियं सखायं पश्यन् विलोकयन् अहं किं किमर्थं सहस्रधा न दीर्य्ये न विदीर्णो भवामि अथवा रामेण किं दुष्करं कर्त्तुमशक्यम्।

(ख) अनुभावमात्रे समुपस्थिता विद्यमाना श्रीः यस्य तम् अनुभावमात्रावशेषम् ईदृशं सीताशोकेन नितरां शीर्णकायं रघुनाथं सहसा अकस्मात् वीक्ष्य दृष्ट्वा एव प्रथमं प्रमूढस्य मोहमुपागतस्य जनकस्य प्रबोधनात् अनन्तरं मातरः विधुराः शोकाभिभूताः सत्यः प्रमोहं मूर्च्छाम् उपयान्ति उपगच्छन्ति।

(ग) तस्मिन्नकरुणे— तस्मिन् रघुजनककुलयोः सर्व्वमङ्गलनिदानभूते सीतारूपे वस्तुनि अकरुणे पूर्णगर्भावस्थायां विनापराधं विवासनात्

(१) तस्मिन्। १।२।४। तस्याम्। ३।

यावत् सम्भावयामि ।

इत्युत्तिष्ठति ।

कुशलवौ । इतइतस्तातः ।

इति सकरुणाकुलं (१) परिक्रम्य निष्क्रान्ताः सर्वे (क) ।

कुमारप्रत्यभिज्ञानो नाम

षष्ठोऽङ्कः ।

सीतायामतिन्दर्यसंसाचारिणि अकारणमीदृशन्दर्यसंसाचारदूषितो जनो न भवतामनुकम्पामर्हतीत्यर्थः ।

(क) सकरुणाकुलम्— सकरुणं सशोकम् आकुलं व्यस्तञ्च ।

(१) सकरुणाकुलम् । १ । ३ । ४ । सकरुणम् । २ ।

# सप्तमोऽङ्कः ।

ततः प्रविशति लक्ष्मणः ।

लक्ष्मणः । भो भो अद्य खलु भगवता वाल्मीकिना (१) सब्रह्मक्षत्त्रपौरजानपदाः प्रजाः (क) सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्य्यगुरगनायकनिकायो (ख) जङ्गमः स्थावरश्च भूतग्रामः(२) स्वप्रभावेण सन्निधापितः (ग) आदिष्टश्चाहमार्य्येण वत्स लक्ष्मण भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः तद्भागीरथीतीरमनोज्ञस्थानम् ( ३ )

(क) सब्रह्मक्षत्त्रपौरजानपदाः प्रजाः— ब्रह्मभिः ब्राह्मणैः क्षत्त्रैः क्षत्त्रियैः पौरैः पुरवासिभिः जानपदैः जनपदवासिभिश्च सह सब्रह्मक्षत्त्र-पौरजानपदाः तादृश्यः प्रजाः सर्व्वाः प्रजा इत्यर्थः ।

(ख) सदेवासुरतिर्य्यगुरगनायकनिकायः— सदेवासुरः देवैरसुरैश्च सहितः तिरश्चां पशुपक्षिणाम् उरगाणां सर्पाणां च नायकनिकायः अधि-पतिसमूहः यस्मिन् सः तथोक्तः ।

(ग) सन्निधापितः उपस्थापितः स्थावराणां सन्निधानं तत्तदधिष्ठातृभिः ।

(१) भो भोः किमु खलु भगवता वाल्मी-किना । १ । ४ ।
भो भो भगवतः खलु वाल्मीकिना ।२।
भो भो अद्य खलु भगवता वाल्मी-किना । ३ ।

(२) सदेवासुरमनुष्यतिर्य्यगुरगनायक-निकायसन्तानश्च जङ्गमो भूत-ग्रामः । १ ।
सदेवासुरतिर्य्यगुरगनायकनिकायो जङ्गमः स्थावरश्च भूतग्रामः ।२।३।
मर्त्त्यामर्त्त्यसदेवासुरमनुष्यतिर्य्यगुर-गनायकनिकायसन्तानश्च जङ्गमो भूतग्रामः । ४ ।

(३) तद्गङ्गातीरमातोद्यस्थानम् ।१।२।४।
तद्भागीरथीतीरमनोज्ञस्थानम् ।३।

उपगम्य क्रियतां समाजसन्निवेश इति कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानेषु समुपवेशसङ्गो (क) मया (१)। अयञ्च (२)

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य्य इत एवाभिवर्त्तते (ख) ॥

ततः प्रविशति रामः ।

रामः । वत्स लक्ष्मण अपि स्थिता रङ्गप्रेक्षकाः (३) (ग) ।

लक्ष्मणः । अथकिम् ।

रामः । इमौ पुनर्वत्सौ कुशलवौ चन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं (घ) लम्भयितव्यौ ।

लक्ष्मणः । प्रभुस्नेहप्रत्ययात्तथैव कृतम् (ङ) । इदन्त्वास्तीर्णं राजासनम् उपविशत्वार्य्यः ।

(क) समुपवेशसङ्गः— समुपवेशः आनुपूर्व्या उपवेशन तस्य सङ्गः योजना व्यवस्थापनमिति यावत् ।

(ख) प्राप्तकष्टमुनिव्रतः— प्राप्तम् अवलम्बितं कष्टं कष्टकरं मुनिव्रतं दारान्तरपरिग्रहविरतिरूपं येन सः तथोक्तः ।

(ग) अपि स्थिता रङ्गप्रेक्षकाः— अपिः प्रश्ने रङ्गप्रेक्षकाः अभिनयदर्शनार्थमुपनिमन्त्रिताः पुरुषाः स्थिताः यथार्हमुपविष्टाः किम् ।

(घ) स्थानप्रतिपत्तिम् उपवेशनस्थानगौरवम् ।

(ङ) प्रभुस्नेहप्रत्ययात् भवद्वात्सल्यदर्शनात् ।

(१) कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थाने समुपवेशसङ्गो मया । १ । ४ ।
कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानेषु समुपवेशनं मया ।२।
कृतश्च मर्त्यामर्त्यभूतग्रामस्य समुचितस्थानसङ्गो मया । ३ ।

(२) अयन्तु । १ । २ । ४ । अयञ्च । ३ ।

(३) अपि स्थिता रङ्गप्रेक्षकाः ।१।२।
उपस्थिता रङ्गप्राश्निकाः ।३।४।

रामः । उपविशति (१) ।

लक्ष्मणः । प्रस्तूयतां भोः (२) ।

प्रविश्य

सूत्रधारः । भगवान् (३) भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनञ्च करुणाद्भुतरसञ्च (४) किञ्चिदुपनिबद्धं तत्र कार्य्यगौरवादवधातव्यमिति (क) ।

रामः । एतदुक्तं भवति साक्षात्कृतधर्म्माणो महर्षयः (५) तेषामृतम्भराणि परोरजांसि (६) प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानीति (ख) ।

(क) भूतार्थवादी— भूतम् अविप्लुतम् अर्थम् इतिवृत्तरूपं वस्तु वदति वर्णयति सः तथोक्तः। करुणाद्भुतरसम् - करुणाद्भुतौ रसौ यस्मिन् तत् करुणेनाद्भुतेन च रसेन पूर्णमित्यर्थः। उपनिबद्धं प्रणीतम्। कार्य्यगौरवात् - कार्य्यस्य प्रस्तूयमानस्याभिनयस्य गौरवात् बहुमानात्।

(ख) एतदुक्तं भवति सूत्रधारोक्तेरेष निष्कृष्टार्थः। साक्षात्कृतधर्म्माणः— साक्षात्कृतः आर्षेण चक्षुषा प्रत्यक्षवत्परिज्ञातः धर्म्मः वस्तुतत्त्वं यैः ते तथोक्ताः। ऋतम्भराणि— ऋतस्येव सारः उत्कर्षः येषां तानि। परोरजांसि—

(१) रामः। उपविशति। उभावुपविशतः। १।
रामः। उपविशति। सर्व्वे उपविशन्ति। २।
रामः। उपविशति। ३।
उभौ। उपविशतः। ४।

(२) रामः। प्रस्तूयतां भोः।१।२।४।
लक्ष्मणः। प्रस्तूयतां भोः। ३।

(३) भगवान्।१।३।४। भो भो भगवान्।२।

(४) पावनकरुणाद्भुतरसम्। १। २।
पावनञ्च करुणाद्भुतरसञ्च। ३।
पावनं करुणाद्भुतरसम्। ४।

(५) ऋषयः।१।२।४। महर्षयः। ३।

(६) भगवतां परोरजांसि। १। २। ४।
परोरजांसि। ३।

नेपथ्ये

हा अज्जउत्त हा कुमारलक्खण एआइणिं मन्दभाइणिं असरणं अरणे आसणप्पसववेअणं हदासा (१) सावदा मं अहिलसन्ति सा(२) दाणीं मन्दभाइणी भाईरहीए(३) अत्ताणअं विणिक्खिविस्सं (४) (क)।

लक्ष्मणः। आत्मगतम्। कष्टं वतान्यदेव किमपि (५)।

सूत्रधारः।

विश्वम्भरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति (ख)।

इति निष्क्रान्तः (६)।

---

रजसः परापि रजोगुणेनासंस्पृष्टानि सत्त्वगुणप्रधानानीत्यर्थः। प्रज्ञानानि बोधशक्तयः। न क्वचिद्व्याहन्यन्ते - क्वचित् कस्मिंश्चित् देशे काले विषये वा न व्याहन्यन्ते न प्रतिबध्यन्ते न विप्लुतानि भवन्तीत्यर्थः। अनभिशङ्कनीयानि विप्लुतत्वशङ्कया योजयितुमनर्हाणि।

(क) हा आर्यपुत्र हा कुमारलक्ष्मण एकाकिनीं मन्दभागिनीम् अशरणाम् अरण्ये आसन्नप्रसववेदनां हताशाः श्वापदाः माम् अभिलषन्ति सा इदानीं मन्दभागिनी भागीरथ्याम् आत्मानं विनिक्षेप्स्यामि।

(ख) प्राप्तप्रसवम् आसन्नप्रसवकालम् उपस्थितप्रसववेदनं वा।

---

(१) हदासं।१।२। हदासा।३।४।

(२) सा।१।४। साहं।२। ता।३।

(३) भाईरधीए।१।२।४। मन्दाइणीए।३।

(४) णिक्खिविस्सं।१।२।४। णिक्खिवेमि।३।

(५) आत्मगतम्। कष्टं वतान्यदेव किमपि।१।२।४। कष्टमिदमन्यदिव दैववशेन किमपि।३।

(६) इति सूत्रधारो निष्क्रान्तः।१।२।४। इति निष्क्रान्तः।३।

रामः । हा देवि हा देवि । लक्ष्मण अवेक्षस्व (१) (क) ।

लक्ष्मणः । आर्य्य नाटकमिदम् (२) ।

रामः । हा देवि दण्डकारण्यवासप्रियसखि एष ते रामात् दैवदुर्विपाकः ।

लक्ष्मणः । आर्य्य दृश्यतां तावत् प्रबन्धार्थः ।

रामः । एष सज्जोऽस्मि वज्रमयः ।

ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां (ख) पृथ्वीभागी-
रथीभ्याम् (३) अवलम्बिता सीता ।

रामः । वत्स लक्ष्मण असंविज्ञातमनिबन्धनमन्धतमस-
मिव (४) प्रविशामि धारय माम् (ग) ।

देव्यौ (५) ।

समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्द्धसे ।
अन्तर्जलं प्रसूतासि रघुवंशधरौ सुतौ ॥

(क) अवेक्षस्व अवलोकय यथा सीता भागीरथ्यामात्मानं न निक्षिपति तथा कुरु इत्यर्थः ।

(ख) उत्सङ्गितैकैकदारकाभ्याम्— उत्सङ्गितः उत्सङ्गे क्रोडे धृतः एकैकः दारकः नवप्रसूतयोः सीतातनययोरन्यतरः याभ्याम् ।

(ग) असंविज्ञातम् अननुभूतपूर्व्वम् । अनिबन्धनम् अहेतुकम् आकस्मिकमिति यावत् ।

(१) देवि त्राणमपेक्षस्व । १ । २ । ४ ।
हा देवि हा देवि । लक्ष्मण अवेक्षस्व । ३ ।

(२) नाटकमिदं नाटकमिदम् ।१।२।
नाटकमिदम् । ३ ।

(३) पृथ्वीगङ्गाभ्याम् । १ । २ । ४ ।
पृथिवीजाह्नवीभ्याम् । ३ ।

(४) तम इव । १ । २ । ४ ।
अन्धतमसमिव । ३ ।

(५) गङ्गा । १ । २ । देव्यौ । ३ । ४ ।

सीता । समाश्वस्य । दिट्ठिआ दारए पसूद म्हि । हा अज्जउत्त (क) ।

इति मूर्च्छति ।

लक्ष्मणः । पादयोर्निपत्य । आर्य्य(१) दिष्ट्या वर्द्धामहे कल्याणप्ररोहो रघुवंशः । विलोक्य । हा हा कथं क्षुभितवाष्पोत्पीडनिर्भरः प्रमुग्ध एवार्य्यः (ख) ।

इति वीजयति ।

पृथ्वी । वत्से समाश्वसिहि समाश्वसिहि ।

सीता । आश्वस्य । भअवदि का तुमं इअं अ (ग) ।

पृथ्वी । इयं ते श्वशुरकुलदेवता भागीरथी ।

सीता । भअवदि णमो दे (२) (घ) ।

भागीरथी । चारित्रोपचितां कल्याणसम्पदमधिगच्छ (३) (ङ) ।

(क) दिष्ट्या दारकौ प्रसूता अस्मि । हा आर्य्यपुत्र ।

(ख) कल्याणप्ररोहः— कल्याणः मङ्गलमयः प्ररोहः अङ्कुरः यस्य सः तथोक्तः सीतातनयोत्पत्त्या रघुवंशः प्रतिष्ठां गत इत्यर्थः । क्षुभितवाष्पोत्पीडनिर्भरः— क्षुभितेन अत्यर्थं विगलितेन वाष्पोत्पीडेन अश्रुप्रवाहेण निर्भरः आकुलः ।

(ग) भगवति का त्वम् इयं च ।

(घ) भगवति नमः ते ।

(ङ) चारित्रेण सच्चरितेन उपचितां सञ्चितां कल्याणसम्पदं कल्याणपरम्पराम् अधिगच्छ प्राप्नुहि ।

---

(१) आर्य्यार्य्य ।१।२।४। आर्य्य । ३ ।

(२) णमो दे णमो दे ।१।२। णमो दे ।३।४।

(३) चारित्रोपचितां कल्याणसम्पदमनुगच्छ । १ । २ । ४ । चारित्रोपचितं कल्याणसमुदायमधिगच्छ । ३ ।

लक्ष्मणः । अनुगृहीताः स्मः ।

भागीरथी । इयं ते जननी वसुन्धरा (१) ।

सीता । हा अम्ब एरिसी अहं तुए दिट्ठा (क) ।

पृथ्वी । एहि वत्से एहि पुत्ति ।

इति सीतामालिङ्ग्य मूर्च्छति ।

लक्ष्मणः । सहर्षम् । दिष्ट्या पृथ्वीभागीरथीभ्यामभ्युपपन्ना आर्य्या (ख) ।

रामः । अवलोक्य । करुणतरं खल्वेतद्वर्त्तते ।

भागीरथी । विश्वम्भरापि नाम व्यथत इति जितमपत्यस्नेहेन यद्वा सर्व्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः । वत्से वैदेहि देवि भूतधात्रि समाश्वसिहि समाश्वसिहि (२) (ग) ।

(क) हा अम्ब ईदृशी अहं त्वया दृष्टा ।

(ख) अभ्युपपन्ना अनुगृहीता ।

(ग) मोहग्रन्थिः— मोहः अपत्यस्नेहादिरूपा माया ग्रन्थिः यस्य सः तथोक्तः ग्रन्थिवत्त्वलो हि तन्तुर्दुरुच्छेदो भवति । अनुपप्लवः— उपप्लवः उच्छेदः तद्रहितः दुरुच्छेद इत्यर्थः ।

(१) इयन्तु जननी ते वसुन्धरा ।१।२।४।
इयन्ते जननी वसुन्धरा । ३ ।

(२) रामः । अवलोक्य । करुणतरं खल्वेतद्वर्त्तते विश्वम्भरापि नाम व्यथत इति जितमपत्यस्नेहेन यद्वा सर्व्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः ।

भागीरथी । वत्से वैदेहि देवि भूतधात्रि समाश्वसिहि । १ । २ ।

रामः । अवलोक्य । करुणतरं खल्वेतद्वर्त्तते ।

भागीरथी । विश्वम्भरापि नाम व्यथत इति जितमपत्यस्नेहेन यद्वा सर्व्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः । वत्से वैदेहि देवि भूतधात्रि समाश्वसिहि समाश्वसिहि । ३ ।

पृथ्वी (१) । देवि सीतां प्रसूय कथमाश्वसिमि ।

एकश्चिरं राक्षसमध्यवास-

स्त्यागो (२) द्वितीयश्च सुदुःसहोऽस्याः (३) (क) ।

भागीरथी ।

को नाम पाकाभिमुखस्य अन्तु- (४)

द्वाराणि दैवस्य पिधातुमीष्टे (ख) ॥

पृथ्वी । भागीरथि सह्यमुक्तम् । युक्तमेतद्वा रामभद्रस्य

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।

नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः (ग) ॥

सीता । हा अज्जउत्तं सुमराविद म्हि (५) (घ) ।

पृथ्वी । आः कस्तवार्य्यपुत्तः ।

सीता । सलज्जास्रम् । जह वा अम्बा भणादि (ङ) ।

(क) अस्याः सीतायाः एकः चिरं दीर्घकालं राक्षसमध्यवासः तद्रूपः अनिष्टापात इत्यर्थः द्वितीयः अपरश्च त्यागः तद्रूपः अनिष्टापात इत्यर्थः सुदुःसहः सोढुमशक्यः ।

(ख) पाकाभिमुखस्य फलोन्मुखीभूतस्य । पिधातुम् आवरीतुं निरोद्धुमिति यावत् ।

(ग) न प्रमाणीकृतः न अवेक्षितः । अग्निः विशोधनेन सीताया निर्दोषतापरिचायकः । अनुवृत्तिः सीतया रामस्य वनवाससाहचर्य्यादिरूपं चित्तानुवर्त्तनम् ।

(घ) हा आर्य्यपुत्त्रं स्मारिता अस्मि ।

(ङ) यथा वा अम्बा भणति ।

(१) पृथ्वी । आश्वस । १ । पृथ्वी ।२।३। (४) जन्तोः । १ । २ । जन्तः । ३ ।

(२) शाङ्कः । १ । २ । त्यागः । ३ । (५) अज्जउत्तं सुमराविद म्हि ।१।२।

(३) सुदुःश्रवः ।१।२। सुदुःसहः ।३। हा अज्जउत्तं सुमराविद म्हि ।३।

रामः । अम्ब दृश्चि ईदृशोऽस्मि (क) ।

भागीरथी । प्रसीद भगवति वसुन्धरे (१) शरीरमसि संसारस्य तत् किमसंविदानेव जामात्रे कुप्यसि (ख) ।

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनैस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत् समाराधनीयः
कृत्स्नो लोकस्तदतिगहनं (२) किं स वत्सः करोतु (ग) ॥

लक्ष्मणः । अव्याहतान्तःप्रकाशा हि देवता भूतेषु विशेषेण गङ्गा तदेष ते प्रणामाञ्जलिः (३) (घ) ।

रामः । अम्ब अनुवृत्तस्त्वया भगीरथगृहे (४) प्रसादः (ङ) ।

(क) ईदृशोऽस्मि— ईदृशः संवृत्तोऽस्मि अकारणपरित्यागरूपनिरतिशय-नृशंसाचारदूषिततया नाहं तव कन्यया आर्य्यपुत्त्रशब्देन निर्देशमर्हामीत्यर्थः ।

(ख) असंविदाना अविजानती ।

(ग) कुलधनम्— कुलस्य धनं परमं प्रार्थनीयं वस्तु । तदतिगहनम्— तत् लोकाराधनम् अतिगहनम् अतिविषमम् अतिदुःसम्पादमिति यावत् ।

(घ) अव्याहतान्तःप्रकाशा हि देवता भूतेषु— देवता हि भूतेषु प्राणिषु विषये अव्याहतः अप्रतिबद्धः अन्तःप्रकाशः भूतानामन्तःकरणवृत्तिपरिज्ञानं यया सा प्राणिनामन्तःकरणवर्त्ति किमपि देवतानामविज्ञातं नास्तीत्यर्थः ।

(ङ) अनुवृत्तः अविच्छेदेन प्रवर्त्तितः ।

(१) भगवति वसुन्धरे । १ । २ ।
प्रसीद भगवति वसुन्धरे । ३ ।

(२) तदतिगहनम् । १ । २ ।
तदतिविषमम् । ३ ।

(३) तथाप्येष तेऽञ्जलिः । १ ।
तदयमञ्जलिस्ते । २ ।
तदेष मे प्रणामाञ्जलिः । ३ ।

(४) भगीरथगृहे ।१।२। भगीरथकुले ।३।

पृथ्वी । नित्यं प्रसन्नास्मि वः(१) किन्त्वापातदुःसहः शोकावेगोऽपत्यस्य(२) न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण धैर्य्येण (३) प्रजापुण्यैश्च जीवति ॥

रामः । सकरुणा हि गुरवो गर्भरूपेषु (क) ।

सीता । रुदती कृताञ्जलिः । णेदु मं अत्तणो अङ्गेसु विलअं अम्बा (ख) ।

रामः । किमन्यद् ब्रवीतु ।

भागीरथी । शान्तम् अविलीना संवत्सरसहस्रं भूयाः(४) ।

पृथ्वी । वत्से तावदपेक्षणीयौ ते पुत्त्रौ (५) (ग) ।

सीता । अणाध म्हि किं एदेहिं (६) (घ) ।

रामः । हृदय वज्रमयमसि ।

भागीरथी । कथं त्वं सनाथाप्यनाथा ।

(क) गर्भरूपेषु अपत्येषु ।

(ख) नयतु माम् आत्मनः अङ्गेषु विलयम् अम्बा ।

(ग) ते तव पुत्त्रौ अपेक्षणीयौ पुत्त्रपरिपालनानुरोधेन त्वया जीवितव्यमित्यर्थः ।

(घ) अनाथा अस्मि किम् एताभ्याम् ।

(१) देवि नित्यप्रसन्नास्मि वः । १ । २ ।
नित्यं प्रसन्नास्मि वः । ३ ।

(२) किन्त्वापातदुःसहस्नेहावेगेनैवं ब्रवीमि । १ । २ ।
किन्त्वापातदुःसहः शोकावेगोऽपत्यस्य । ३ ।

(३) सत्त्वेन । १ । २ । धैर्य्येण । ३ ।

(४) वत्सरसहस्राणि । १ । २ ।
संवत्सरसहस्रम् । ३ ।

(५) अपि रक्षणीयौ ते पुत्त्रकौ । १ । २ ।
तावदपेक्षणीयौ ते पुत्त्रौ । ३ ।

(६) अणाध म्हि । १ । २ ।
अणाध म्हि किं एदेहिं । ३ ।

सीता । केरिसं मम मन्दभाइणीए (१) सणाधत्तणं (क) ।

देव्यौ । जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ।

आवयोरपि यत्सङ्गात् पवित्रत्वं प्रकृष्यते (ख) ॥

लक्ष्मणः । आर्य्य श्रूयताम् (२) ।

रामः । शृणोतु लोकः ।

## नेपथ्ये

कलकलः ।

रामः । अद्भुततरं किमपि ।

सीता । किं त्ति सअलं अन्तरिक्खं पज्जलति (३) (ग) ।

देव्यौ । ज्ञातम्

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः ।

आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥

## नेपथ्ये

देवि सीते नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।

आलेख्यदर्शने देवो यथाह (४) रघुनन्दनः ॥

सीता । दिट्ठिआ अत्थदेअदाओ स्फुरन्दि (५) (घ) ।

(क) कीदृशं मम मन्दभागिन्याः सनाथत्वम् ।

(ख) प्रकृष्यते परिवर्द्धते ।

(ग) किमिति सकलम् अन्तरीक्षं प्रज्वलति ।

(घ) दिष्ट्या अस्त्रदेवताः स्फुरन्ति ।

---

(१) अभव्वाए ।१।२। मन्दभाइणीए ।३। सअलं अन्तरिक्खं पज्जलदि । ३ ।

(२) श्रुतम् । १ । २ । श्रूयताम् । ३ ।

(३) अन्तरिक्खं पज्जाउलं । १ । २ ।

(४) यदाह । १ । २ । यथाह । ३ ।

(५) परिप्फुरन्ति ।१।२। फ्फुरन्ति । ३ ।

लक्ष्मणः । उक्तमासीदार्य्येण सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति ।

रामः ।

नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात् ।
अनुध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः ॥
क्षुभिताः कामपि दशां कुर्व्वन्ति मम साम्प्रतम् ।
विस्मयानन्दसन्दर्भजर्ज्जराः करुणोर्म्मयः (१) (क) ॥

देव्यौ । रमस्व (२)-वत्से रामभद्रतुल्याविदानीन्ते संवृत्तौ पुत्त्रौ (३) (ख) ।

सीता । भअवदीओ को एदाणं खत्तिओचिदं कम्म करिस्सदि (४) (ग) ।

(क) विस्मयस्य आनन्दस्य च सन्दर्भेण ग्रन्थनेन जर्जराः विमिश्राः करुणोर्म्मयः शोकप्रवाहाः क्षुभिताः विकृताः सन्तः साम्प्रतम् अधुना मम कामपि अनिर्व्वचनीयस्वरूपां दशाम् अवस्थां कुर्व्वन्ति ।

(ख) रमस्व सुखिनी भव ।

(ग) भगवत्यौ कः एतयोः क्षत्त्रियोचितं कर्म्म करिष्यति ।

---

(१) देव्यौ । नमो वः परमास्त्रेभ्यो
राघवस्य परिग्रहात् ।
अनुध्यातैरुपेतव्यं
वत्सयोर्भद्रमस्तु वः ॥
रामः । क्षुभिताः कामपि दशां
कुर्व्वन्ति मम साम्प्रतम् ।
विस्मयानन्दसन्दर्भ-
जर्जराः करुणोर्म्मयः ॥१।२
रामः । नमो वः परमास्त्रेभ्यो
धन्याः स्मो वः परिग्रहात् ।
अनुध्यातैरुपेतव्यं
वत्सयोर्भद्रमस्तु वः ॥
क्षुभिताः कामपि दशां
कुर्व्वन्ति मम साम्प्रतम् ।
विस्मयानन्दसन्दर्भ-
जर्जराः करुणोर्म्मयः ।३।

(२) मन्यस्व । १ । २ । रमस्व । ३ ।

(३) पुत्त्रकौ संवृत्तौ । १ । २ । संवृत्तौ पुत्त्रौ । ३ ।

(४) करिस्सदि त्ति ।१।२। करिस्सदि ।३।

रामः ।

एषां वशिष्ठगुप्तानां रघूणां वंशवर्द्धिनी ।
कष्टं सीतापि सुतयोः संस्कर्त्तारं न विन्दति (१) ॥

भागीरथी । पुत्रि किं तवानया चिन्तया एतौ हि वत्सौ स्तन्यत्यागात् परेण भवगतो वाल्मीकेरर्पयिष्यामि स एतयोः चत्त्रकृत्यं करिष्यति ।

यथा वशिष्ठाङ्गिरसावृषी प्राचेतसस्तथा ।
जनकानां रघूणाञ्च वंशयोरुभयोर्गुरुः(क) (२) ॥

रामः । सुविचिन्तितं भगवत्या (३) ।

लक्ष्मणः । आर्य्य सत्यं विज्ञापयामि तैस्तैरुपायैर्वत्सौ कुशलवावुत्प्रेक्षे (ख) ।

(क) अङ्गिरसोऽपत्यं पुमान् आङ्गिरसः शतानन्दः ।
(ख) उत्प्रेक्षे तव तनयावेताविति मन्ये ।

(१) संस्कर्त्तारं न विन्दति । १ । २ ।
संस्कारं नैव विन्दति । ३ ।

(२) देव्यौ । पुत्रि किं तवानया चिन्तया एतौ हि वत्सौ स्तन्यत्यागात् परेण भगवतो वाल्मीकेरर्पयिष्यावः स एवैतयोः चत्त्रकृत्यं करिष्यति
यथा वशिष्ठाङ्गिरसा-
वृषी प्राचेतसस्तथा ।
जनकानां रघूणाञ्च
वंशयोरुभयोर्गुरुः ॥
राम. । सुविचिन्तितं भगवतीभ्याम् । १ । २ ।
भागीरथी । पुत्रि किं तवानया चिन्तया एतौ हि वत्सौ स्तन्यत्यागात् परेण भगवतो वाल्मीकेरर्पयिष्यामि स एतयोः चत्त्रकृत्यं करिष्यति
यथा वशिष्ठाङ्गिरसा-
वृषी प्राचेतसस्तथा ।
जनकानां रघूणाञ्च
वंशयोरुभयोर्गुरुः ॥

(३) रामः । सुविचिन्तितं भगवत्या । ३ ।

एतौ हि जन्मसिद्धास्त्रावुभौ (१) प्राचेतसान्मुनेः।
वीरौ सम्प्राप्तसंस्कारौ वयसा द्वादशाब्दिकौ॥

रामः। वत्स इत्येवाहं (२) परिप्लवमानहृदयः सम्प्रमुग्धोऽस्मि (३) (क)।

पृथ्वी। एहि वत्से पवित्रीकुरु रसातलम्।

रामः। हा प्रिये लोकान्तरं गतासि (४)।

सीता। णेदु मं अत्तणो अङ्केसु विलअं अम्बा ण सह म्हि (५) एरिसं जीअलोअपरिवत्तं अणुभविदुं (ख)।

रामः। किमुत्तरं स्यात् (ग)।

पृथ्वी। वत्से स्तन्यत्यागं यावत् (६) मन्नियोगतः पुत्रयोरपेक्षस्व परेण ते यथा रोचते तथा करिष्यसि (७)।

(क) इत्येव अस्मादेव कारणात् अहं परिप्लवमानम् आकुलं संशयदोलारूढमिति यावत् हृदयं यस्य सः एतौ मम तनयौ वा न वा इत्येकतरपक्षमाश्रयितुमशक्नुवन्नित्यर्थः सम्प्रमुग्धः विमूढः अस्मि।

(ख) नयतु माम् आत्मनः अङ्केषु विलयम् अम्बा न सहा अस्मि ईदृशं जीवलोकपरिवर्त्तम् अनुभवितुम्।

सहा समर्था।

(ग) किमुत्तरं स्यात्— किम् उत्तरं भवेत् सीतायाः प्रार्थनां श्रुत्वा पृथ्वी किं वदेदित्यर्थः।

(१) जातौ। १। २। उभौ। ३।

(२) इति। १। २। इत्येवाहम्। ३।

(३) सम्मुग्धः। १। २। सम्प्रमुग्धः। ३।

(४) लोकान्तरमसि गता। १। २। लोकान्तरं गतासि। ३।

(५) ण सक्क म्हि। १। २। ण सह म्हि। ३।

(६) स्तन्यत्यागं यावत्। १। २। वत्से स्तन्यत्यागं यावत्। ३।

(७) परेण ते यथा रोचिष्यते। १। २। परेण ते यथा रोचते तथा करिष्यसि। ३।

गङ्गा। एवं नाम।

ततो निष्क्रान्ता गङ्गापृथ्वीसीताः।

रामः। कथं विलय एव वैदेह्याः सम्पन्नः। हा देवि दण्डकारण्यवासप्रियसखि हा चारित्रदेवते लोकान्तरं पर्य्यवसितासि (क)।

इति मूर्च्छति (१)।

लक्ष्मणः। भगवन् वाल्मीके परित्रायस्व परित्रायस्व एष किं ते काव्यार्थः (२) (ख)।

### नेपथ्ये

अपनीयतामातोद्यकम्। भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्त्यामर्त्त्याः पश्यत भगवता (३) वाल्मीकिनानुज्ञातं पवित्रमाश्चर्य्यम् (ग)।

लक्ष्मणः। विलोक्य।

मन्थादिव क्षुभ्यति गाङ्गमम्भो व्याप्तञ्च देवर्षिभिरन्तरीक्षम्।
आश्चर्य्यमार्य्या सह देवताभ्यां गङ्गामहीभ्यां सलिलादुदेति(४)॥

### पुनर्नेपथ्ये

अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ भजस्व नौ।

(क) पर्य्यवसितासि प्रस्थितासि।

(ख) काव्यार्थः काव्यप्रयोजनम्।

(ग) भगवता वाल्मीकिनानुज्ञातम् भगवतो वाल्मीकेरनुज्ञया सम्पन्नम्।

(१) मुह्यति। १। २। मूर्च्छति। ३।
(२) एष ते काव्यार्थः। १। २। एष किन्ते काव्यार्थः। ३।
(३) महर्षिणा भगवता। २। भगवता। ३।
(४) उपैति। १। २। उदेति। ३।

अर्पितेयं तवाभ्यासे सीता पुण्यव्रता बधूः (क) ॥

लक्ष्मणः। आश्चर्य्यमाश्चर्य्यम्। आर्य्य पश्य पश्य। विलोक्य (१)। कष्टमद्यापि नोच्छ्वसित्यार्य्यः।

ततः प्रविशत्यरुन्धती सीता च।

अरुन्धती। त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम्।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना (ख) ॥

सीता। ससम्भ्रममुपसृत्य रामं स्पृशन्ती (२)। समस्ससदु अज्जउत्तो (ग)।

रामः। समाश्वस्य सानन्दम्। भोः किमेतत्। दृष्ट्वा सहर्षाद्भुतम्। अये देवी अरुन्धती सर्व्वे च प्रहृष्यदृष्यशृङ्गशान्तासमेता गुरवः (३)।

(क) नौ आवाम् गङ्गापृथ्व्यौ भजस्व अनुगृह्णीस्व सीतां रामपरिगृहीतां कुलेत्यर्थः।

(ख) शालीनशीलताम् अधृष्टस्वभावताम्।

(ग) समाश्वसितु आर्य्यपुत्त्रः।

---

(१) दिष्ट्या अहो आश्चर्य्यमाश्चर्य्यम् आर्य्यार्य्य पश्य पश्य। १।

दिष्ट्या आश्चर्य्यमाश्चर्य्यम् आर्य्यार्य्य पश्य पश्य। २।

आश्चर्य्यमाश्चर्य्यम् आर्य्य पश्यपश्य। विलोक्य। ३।

(२) ससम्भ्रमं स्पृशन्ती। १। २।

ससम्भ्रममुपसृत्य रामं स्पृशन्ती। ३।

(३) दृष्ट्वा सहर्षाद्भुतम्। कथं देवी। सलज्जस्मितम्। अम्बा अरुन्धती सर्व्वे प्रहृष्यदृष्यशृङ्गशान्तासमेता गुरवः। १।

दृष्ट्वा सहर्षाद्भुतम्। कथं देवी। सलज्जस्मितम्। अम्बा अरुन्धती सर्व्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तासमेता गुरवः। २।

दृष्ट्वा सहर्षाद्भुतम्। अये देवी अरुन्धती सर्व्वे च प्रहृष्यदृष्यशृङ्गशान्तासमेता गुरवः। ३।

अरुन्धती। वत्स एषा भगवती (१) भगीरथगृहदेवता सुप्रसन्ना गङ्गा।

भागीरथी (२)। जगत्पते रामभद्र स्मर्य्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनम् यथा सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भवेति तत्रानृणास्मि (३)।

अरुन्धती। इयं ते श्वश्रूर्भगवती वसुन्धरा।

पृथ्वी (४)। उक्तञ्च पूर्व्वमायुष्मता वत्सापरित्यागे (५) यथा भगवति वसुन्धरे श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति तदधुना कृतवचनास्मि (६) प्रभोर्वत्सस्येति (क)।

रामः। कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः। इति प्रणमति (७)।

अरुन्धती। भो भोः पौरजानपदा इयमधुना भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्य (८) ममारुन्धत्याः समर्पिता पूर्व्वञ्च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा सब्रह्मकैश्च

(क) कृतवचना अनुष्ठितनियोगा।

(१) एषा। १। २। एषा भगवती। ३।
(२) नेपथ्ये। १। २। ३।
(३) तत्रानृणास्मि जाता। १। २। ४।
तत्रानृणास्मि। ३।
(४) नेपथ्ये। १। २। ३। ४।
(५) वत्सात्यागे। १। २।
वत्सापरित्यागे। ४।
(६) तदनु नाकृतवचनास्मि। १। २।
तदधुना कृतवचनास्मि। ३। ४।
(७) प्रणमामि। १।
प्रणमामि वः। २।
इति प्रणमति। ३। ४।
(८) भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्यमाना। १। २। ४।
इयमधुना भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्य।३।

देवैः संस्तुता सवित्टकुल (१) बधूर्देवयजनसम्भवा सीतादेवी परिगृह्यत (२) इति कथं भवन्तो मन्यन्ते (क) ।

लक्ष्मणः । एवमार्य्ययारुन्धत्या निर्भर्त्सिताः प्रजाः कृत्स्नश्च भूतग्राम आर्य्यां नमस्करोति लोकपालाश्च सप्तर्षयश्च पुष्प-वृष्टिभिरुपतिष्ठन्ते ।

अरुन्धती । जगत्पते रामभद्र (३)

नियोजय यथाधर्म्मं प्रियां त्वं धर्म्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे (ख) ॥

सीता । जाणादि अज्जउत्तो ( ४ ) सीतादुक्खं पम-ज्जिदुं (ग) ।

रामः । यथा भगवत्यादिशति ।

(क) प्रथमस्य विशुद्धचरित्रतां ख्यापयित्वा। सब्रह्मकैः— ब्रह्मणा प्रजा-पतिना सह सब्रह्मकाः तैः प्रजापतिप्रभृतिभिरित्यर्थः ।

(ख) हिरण्मय्याः हिरण्यनिर्म्मितायाः प्रतिकृतेः प्रतिरूपस्य पुण्यप्रकृतिं पवित्रमादर्शं प्रियां धर्म्मचारिणीं धर्म्मचरणसहचरीं त्वं यथाधर्म्मं धर्म्ममनु-सृत्य अध्वरे अश्वमेधे नियोजय एतया सहितः अश्वमेधे प्रवर्त्तस्वेत्यर्थः ।

(ग) जानाति आर्य्यपुत्रः सीतादुःखं प्रमार्ष्टुम् ।

अत्र रघुवंशम्

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेः सैवासीद्यस्माज्जाया हिरण्मयी ॥ १५ ॥ ६१ ॥

(१) सावित्रकुल । १ । २ । ४ ।
सवितृकुल । ३ ।

(२) परिगृह्यताम् । १ । २ । ४ ।
परिगृह्यते । ३ ।

(३) रामभद्र । १ । २ । ४ ।
रामचन्द्र । ३ ।

(४) जाणादि अज्जउत्त । १ । २ । ४ ।
जाणादि अज्जउत्तो । ३ ।

लक्ष्मणः । कृतार्थोऽस्मि ।

सीता । जीविद म्हि (क) ।

लक्ष्मणः । आर्ये एष निर्लज्जो लक्ष्मणः प्रणमति ।

सीता । वच्छ एरिसो (१) चिरं जीव (ख) ।

अरुन्धती । भगवन् वाल्मीके उपनीयेतामिमौ सीतागर्भसम्भवौ (२) रामभद्रस्य कुशलवौ (३) (ग) ।

इति निष्क्रान्ता ।

रामलक्ष्मणौ । दिष्ट्या तथैव तत् (४) (घ) ।

सीता । सवाप्पाकूतम् (ङ) । कहिं मे पुत्तआ (५) (च) ।

ततः प्रविशति वाल्मीकिः कुशलवौ च ।

वाल्मीकिः । वत्सौ कुशलवौ एष रघुपतिः पिता युवयोः

(क) जीविता अस्मि ।

(ख) वत्स ईदृशः चिरं जीव ।

(ग) रामभद्रस्य उपनीयेतां रामभद्रसमीपमानीयेताम् ।

(घ) एतौ सीतातनयावित्येवं यदस्माभिरनुमितं तत् तथैव पर्य्यवस्यति ।

(ङ) आकूतम् औत्सुक्यम् ।

(च) कुत्र मे पुत्रकौ ।

---

(१) ईदिसो वि । १ । २ । ४ ।
ईदिसो । ३ ।

(२) संभूतौ । १ । २ । ४ । सम्भवौ । ३ ।

(३) पुत्तकौ कुशलवौ । १ । २ ।
कुशलवौ । ३ । ४ ।

(४) दिष्ट्या तथैव तत् । १ । २ । ४ ।
दृष्ट्वा । तथैव तत् । ३ ।

(५) सवाप्पाकुला । कहिं ते पुत्तका मे । १ । २ । ४ ।
सवाप्पाकूतम । कहिं मे पुत्तआ । ३ ।

लक्ष्मणः कनिष्ठतातः सीतादेवी जननी एष राजर्षिर्जनको मातामहः ।

सीता । सहर्षकरुणाद्भुतं विलोक्य । कहं तादो (क) ।

कुशलवौ । हा तात हा अम्ब हा मातामह ।

रामः(१) । सहर्षमालिङ्ग्य । ननु वत्सौ पुण्यैः प्राप्तौ स्थः (ख) ।

सीता । एहि जाद कुश एहि जाद लव चिरस्स परिस्सजध पुणो जम्मन्तरगदं जणणिं (ग) ।

कुशलवौ (२) । तथा कृत्वा । धन्यौ स्वः ।

सीता । भअवं पणमामि (घ) ।

वाल्मीकिः । ईदृश्येव चिरं भूयाः ।

सीता । अम्महे तादो कुलगुरू अज्जाअणो सभत्तुआ अज्जा सन्तादेई सलक्खणा सुप्पसण्णा अज्जउत्तचलणा समं कुशलवा वि दीसन्ति ता णिब्भर म्हि आणन्देण (ङ) ।

(क) कथं तातः ।

(ख) पुण्यैः पूर्व्वसञ्चितपुण्यबलेन मया युवां प्राप्तौ स्थः ।

(ग) एहि जात कुश एहि जात लव चिरस्य परिष्वजेथां पुनः जन्मान्तरगतां जननीम् ।

(घ) भगवन् प्रणमामि ।

(ङ) अम्महे तातः कुलगुरुः आर्य्याजनः सभर्तृका आर्य्या शान्तादेवी सलक्ष्मणाः सुप्रसन्नाः आर्य्यपुत्रचरणाः समं कुशलवौ अपि दृश्येते तत् निर्भरा अस्मि आनन्देन ।

निर्भरा परिपूर्णा ।

(१) रामलक्ष्मणौ ।१।२।४। रामः ।३। (२) कुमारौ ।१।२।४। कुशलवौ ।३।

नेपथ्ये

कलकलः।

वाल्मीकिः। उत्थायावलोक्य च। उत्खात (१) लवणो मथुरेश्वरः प्राप्तः (क)।

लक्ष्मणः। सानुषङ्गाणि कल्याणानि (ख)।

रामः। सर्व्वमिदमनुभवन्नपि न प्रत्येमि। यद्वा प्रकृतिरियमभ्युदयानाम्।

वाल्मीकिः। रामभद्र उच्यतां किन्ते भूयः (२) प्रियमुपकरोमि।

रामः। अतःपरमपि प्रियमस्ति। तथापीदमस्तु

पाप्मभ्यश्च पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा (३)
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।

(क) मथुरेश्वरः— लवणवधानन्तरं कालिन्दीकूले शत्रुघ्नेन निर्म्मिता मथुरा नाम पुरी तस्या ईश्वरः अधिपतिः शत्रुघ्नः।

(ख) कल्याणानि अभ्युदयाः सानुषङ्गाणि अनुषङ्गः अनुचरः तत्सहितानि भवन्ति एकोऽभ्युदयः अभ्युदयान्तरैरनुसर्य्यते इत्यर्थः।

(१) उपहृत। १। २। ४।
उत्खात। ३।

(२) भूयः किन्ते। १। ४।
किन्ते भूयः। २। ३।

(३) पुनाति वर्द्धयति च श्रेयांसि सेयं कथा। १। २। ४।
पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा। ३।

वाल्मीकेः (१) परिभावयन्त्वभिनयैर्विन्यस्तरूपां (२) बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् (क) ॥
इति निष्क्रान्ताः सर्वे ।

सम्मेलनं नाम

सप्तमोऽङ्कः ।

इति भट्टश्रीभवभूतिविरचितमुत्तरचरितं
समाप्तम् ।

(क) मङ्गल्या कल्याणकरी मनोहरा हृदयग्राहिणी जगतः संसारस्य मातेव जननीव हितकारिणी गङ्गेव च भागीरथीव दुरितक्षयकारिणी सेयं कथा रामायणरूपा पाप्मभ्यः दुरितेभ्यः पुनातु विमोचयतु श्रेयांसि कल्याणानि च वर्द्धयतु शब्दब्रह्मविदः शब्दब्रह्मतत्त्वज्ञस्य परिणता परिपाकमुपेयुषी प्रज्ञा धीशक्तिः यस्य तथोक्तस्य कवेः काव्यप्रवर्त्तकस्य वाल्मीकेः अभिनयैः विन्यस्तरूपाम् प्रदर्शितस्वरूपाम् इमां वाणीम् अद्य अस्माभिरभिनीतां रूपकाख्यां भारतीं बुधाः पण्डिताः परिभावयन्तु आलोचयन्तु ।

(१) तामेताम् । १ । २ । ४ ।
वाल्मीकेः । ३ ।

(२) विन्यस्तरूपाः । १ । २ । ४ ।
विन्यस्तरूपाम् । ३ ।